HPMUL/2017/77762 ISSN 2582-2608

# NISSHREYASI

*PEER-REVIEWED MULTIDISCIPLINARY ANNUAL RESEARCH JOURNAL*

**VOL. 07.** **2023**



**Co-ordinated by IQAC Vedavyas Campus, Balahar (H.P.)**

HPMUL/2017/77762 ISSN 2582-2608

| | | |
|---|---|---|
| Title | : | Nisshreyasi ( निःश्रेयसी ) |
| Vol. : | : | 07 |
| Year | : | 2023 |
| Price | : | 450/- |



| | | |
|---|---|---|
| Copies | : | 100 |
| **Printed and Published by** | **:** | Prof. Madan Mohan Pathak, Director<br>Central Sanskrit University, Vedavyas Campus,<br>Balahar, Himachal Pradesh-177108 |
| **Editor** | **:** | Dr. Manjunath S.G. |
| **Email** | **:** | vedanta.vvc@gmail.com |
| **Website** | **:** | http://csu-balahar.edu.in./journal_nisshreyasi.html |
| **Phone** | **:** | 7505639178 |
| **Printed at** | **:** | Abhi Printers,<br>F-19A, Focal Point Ext. Jalandhar-144103.<br>09465238137 (M) |
| **Composed and Designed By** | **:** | Ajay Sharma for Abhi Printers. |

ISSN 2582-2608

# सम्पादकीयम्......

वेदमाश्रित्य वेदोक्ततत्त्वप्रतिपादनाय प्रवृत्तानि नैकविधानि दर्शनानि सन्ति। वेदार्थमेव सुलभतया निरूपयन्ति स्मृतय:। वेदार्थपरिपोषणाय इतिहासपुराणादीनि चारब्धानि। सर्वेषामेषां लक्ष्यमेकमेव। तच्च धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थतत्साधन-प्रतिपादनम्। अत एव वेदबोधिततत्त्वप्रतिपादकानि दर्शनानि आस्तिकदर्शनानीति प्रसिद्धानि। तदितराणि नास्तिकदर्शनानि।

'शास्त्रं सुचिन्तितमथो परिचिन्तनीयम्' इतीयमाचार्यभर्तृहरिप्रोक्ता अभियुक्ति: शास्त्रस्य निरन्तरानुशीलने पौन:पुन्यान्वेषणे चास्मान् प्रचोदयति। वयं हि खलु पश्याम: यत् एक एव मूलशास्त्रग्रन्थ: विविधटीकाकाराणां व्याख्याकाराणाञ्च प्रतिभावैशिष्ट्यं प्राप्य अभिनवरूपं विधत्ते। अत: अस्माकं पूर्वजै: शास्त्रपरम्परा काचित् परिकल्पिता। शास्त्रसंप्रदायश्च परिरक्षित:, तस्यैव उत्तरदायित्वमस्माकमुपरि निहितं वर्तते। अत: अस्माभि: शास्त्ररक्षणे शास्त्रचिन्तने च निरन्तरं बद्धादरैर्भाव्यम्, तेनैव क्रमेण अनेकेषां ग्रन्थरत्नानां निर्माणं भवति। काले काले शोधपत्ररूपेण लेखरूपेण वा शास्त्रस्य तत्त्वं जनमानसं प्रति समागच्छद् वर्तते।

अस्यां शोधपत्रिकायां न केवलमद्वैतवेदान्तस्य विचारो वर्तते। यद्यपि मुख्यत: वेदान्तविचारा: वर्तन्ते, तथाप्यन्ये विषया अप्युपनिबद्धा: सन्ति। अस्या: शोधपत्रिकाया: प्रकाशनकर्मणि सहकार-उपकारकृद्भ्य: सर्वेभ्य: कार्तज्ञं विनिवेद्यन्ते।

**सम्पादक:**

# *REVIEW COMMITTEE*

**Prof. R. Pratibha**

H.O.D. Advaita Vedanta,

Central Sanskrit University Guruvayur Campus, Kerala

**Prof. Satisha K.S.**

H.O.D. Advaita Vedanta, National Sanskrit University,

Tirupati, Andhra Pradesh

**Dr. Mantha Sriniwasu**

Project Officer, Central Sanskrit University, New Delhi

# समीक्षा-समितिः

**प्रो. आर्. प्रतिभा**

अद्वैतवेदान्तविभागाध्यक्षा,

केन्द्रीयसंस्कृतविश्वविद्यालयः गुरुवायूरपरिसरः, केरला

**प्रो. सतीशः के. एस्.**

अद्वैतवेदान्तविभागाध्यक्षः

राष्ट्रियसंस्कृतविश्वविद्यालयः तिरुपतिः, आन्ध्रप्रदेशः

**डॉ. मन्था श्रीनिवासुः,**

परियोजनाधिकारी,

केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली

# ADVISORY BOARD

**Prof. Sukanta Kumar Senapati**
Director
Central Sanskrit University Ekalavya Campus,
Agartala, Tripura

**Prof. N.C. Panda**
H.O.D. Sanskrit, Dean,
School of Languages,
Central University of Odisha, Koraput, Odisha

**Dr. Madhukeshwar Bhat**
Director, Publication & Program
Central Sanskrit University,
New Delhi

# परामर्शदातृ-समितिः

**प्रो. सुकान्तकुमारः सेनापतिः**
निदेशकः, केन्द्रीयसंस्कृतविश्वविद्यालयः एकलव्यपरिसरः,
अगर्तला, त्रिपुरा

**प्रो. एन्. सी. पण्डाः,**
संस्कृतविभागाध्यक्षः संकायाध्यक्षश्च, भाषा-विद्या-शाखा,
ओडिशा-केन्द्रीयसंस्कृतविश्वविद्यालयः, कोरापुट, ओडिशा

**डॉ. मधुकेश्वर भट्टः,**
निदेशकः, प्रकाशन-कार्यक्रमविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली

HPMUL/2017/77762 ISSN 2582-2608

# विषयानुक्रमणिका


| | | | |
|---|---|---|---|
| 1. | सम्पादकीयम् | | (iii) |
| 2. | समीक्षा-समितिः | | (iv) |
| 3. | परामर्शदातृ-समितिः | | (v) |

| क्र. सं. | विषयः | लेखकः | पृ. सं. |
|---|---|---|---|
| 1. | **वेदेषु शब्दव्युत्पत्तिः** | प्रो. गणपतिभट्टः | 1-3 |
| 2. | **उपनिषत्सु पुनर्जन्मविचारः** | प्रो. सतीशः के.एस्., पार्वती वि. जे. | 4-9 |
| 3. | **तत्त्वविचारे सामोपनिषदां पात्रम्** | डॉ. रा. सुब्रह्मण्य भिडे | 10-12 |
| 4. | **समन्वयाधिकरणभाष्यस्य रत्नप्रभा-न्यायनिर्णयव्याख्यानयोः तुलनात्मकमध्ययनम्** | डॉ. श्रीकरः | 13-15 |
| 5. | **दर्शनशास्त्रीयः व्यक्तित्वविमर्शः** | डॉ. सत्यदेवः | 16-19 |
| 6. | **वार्तिकप्रस्थानविमर्शः** | श्री राहुलराजशेखरभट्टः | 20-22 |
| 7. | **गुणत्रयविचारः** | डॉ. नेपालदासः | 23-27 |
| 8. | **संस्कृतसाहित्यपरम्परायां श्रीदुर्गादत्तशास्त्रिणः अवदानम्** | डॉ. मुकेशशर्मा, डॉ. प्रतिज्ञा आर्या | 28-32 |
| 9. | **दहरविद्यायां परमेश्वरो दहराकाशशब्दवाच्यः-विश्लेषणात्मकमध्ययनम्** | श्री अमितसरकारः | 33-36 |
| 10. | **गीतानुसारं पवित्रमयजीवनमार्गान्वेषणस्योपायाः** | श्री मानसमण्डलः | 37-39 |
| 11. | **केदारनाथचलचित्रे अनौचित्यम्** | डॉ. पंकजः | 40-42 |
| 12. | **''छन्दसरनुच्छादः''- एकमध्ययनम्** | श्री प्रतापकुमारमेहेरः | 43-45 |
| 13. | **श्रीपरशुरामविजयमहाकाव्ये वर्णितपरशुरामकालीनवर्णव्यवस्थायाः वर्तमानकालीन-वर्णव्यवस्थायाश्च समीक्षणम्** | सुश्री आरती | 46-47 |
| 14. | **नित्यानन्दस्मृतितीर्थप्रणीतानां रूपकाणां समीक्षात्मकमध्ययनम्** | श्री चिरञ्जितरायः | 48-55 |
| 15. | **परमलघुमञ्जूषादिशा निपातार्थविचारः** | श्री अनिमेषमण्डलः | 56-60 |
| 16. | **वैदिकसाहित्ये सूर्यविज्ञानम्** | सुश्री गौरी राठौर, सुश्री ज्योति राठौर | 61-65 |
| 17. | **समाधिदीपिकाकर्तुः श्रीकृष्णब्रह्मानन्दसरस्वतिनः सारस्वतजीवनम्** | श्री सञ्जयकुमारमण्डलः | 66-70 |
| 18. | **ईशावास्योपनिषदि उक्तस्य आत्मतत्त्वस्य भगवद्गीतायाम् अनुशीलनम्** | साबाना खातुन | 71-74 |
| 19. | **आयुर्वेदवर्णितरोगविषये अथर्ववेदस्य प्रभावः** | श्री सुफलसरकारः | 75-77 |

| | | | |
|---|---|---|---|
| 20. | **महावीरनिर्वाणनाटके भगवतः महावीरस्य जीवनचरितस्य वैशिष्ट्यवर्णनम्** | | 78-80 |
| | | सुश्री रेखा गौतम | |
| 21. | **महाभाष्यदिशा व्याकरणपदार्थविमर्शः** | | 81-83 |
| | | सुश्री सोनालीमण्डलः | |
| 22. | **श्रीमद्भगवद्गीतायाः द्वितीयाध्याये निहितसमायोजनस्य तथ्यात्मकविवेचनम्** | | |
| | | श्रीमती नेहा श्रीवास्तव | 84-87 |
| 23. | **Sri Aurobindo on the Advaita Vedanta Philosophy and his Integral Advaita** | Dr. K.Manogna | 88-91 |
| 24. | **Impact of Colour Therapy Under Astrological Perspectives** | | 92-100 |
| | | Dr. Radha Krishnan | |
| 25. | **The journey of Salvation according to Swami Sitaramdasji Maharaj** | | 101-109 |
| | | Varsha J. Masurkar | |
| 26. | **Application of ICT in College Libraries** | | 110-114 |
| | | Rajdarshini Mekap | |
| 27. | **Five Aspects of Integral Yoga** | Happy Sharma | 115-117 |
| 28. | **Plant Physiology in Principle Upaniṣads** | | 118-120 |
| | | Jyothi L | |
| 29. | **The Significance of the Buddhist *Pāli* Canon in the Modern-day** | | 121-124 |
| | | Nijara Medhi | |
| 30. | **सूफ़ीमत उद्भव और विकास के इतिहास का संक्षिप्त परीक्षण** | | 125-129 |
| | | डॉ. वाहिद नसरू | |
| 31. | **सुदृढ़-समाज व्यवस्था में योग प्रतिपादित 'यम' का योगदान** | | 130-134 |
| | | डॉ. अशोक कुमार मीना | |
| 32. | **यजुर्वेद के परिप्रेक्ष्य में सृष्टितत्त्व** | श्री हाईतोरंग्वे जेलिअंग | 135-138 |
| 33. | **कबीर का दर्शन** | डॉ. ब्रह्मानन्द मिश्र | 139-141 |
| 34. | **योगदर्शन में अविद्या का स्वरूप** | डॉ. बिकासिनी गुमानसिंह | 142-146 |
| 35. | **आयुर्वेद एवं योग का सामान्य अध्ययन** | | 147-150 |
| | | श्री चमन लाल | |
| 36. | **भवभूति के रूपकों में पारिवारिक नीति - आचार** | | 151-155 |
| | | सुश्री राधा आर्या | |
| 37. | **रमलशास्त्र तथा साञ्झा ग्रन्थों के पाशों में अन्तर** | | 156-157 |
| | | श्री नरेश शर्मा | |
| 38. | **शतपथब्राह्मण में यज्ञीय स्वरूप** | श्री सर्वेश ओझा | 158-161 |

ISSN 2582-2608

# वेदेषु शब्दव्युत्पत्तिः

**प्रो. गणपतिभट्टः**

**शोधसारः**

*वेदस्तु ज्ञानराशिः। शब्दाः अनेके, मन्त्राः विविधाः, अनेकाः देवताः, मन्त्रद्रष्टारो महर्षयः दैवांशसंभूताः, छन्दांसि अनेकानि, विभिन्नाः धातुप्रयोगाः, अनूह्याः प्रयोगाः विविधाः- एतत्सर्वं वेदाध्ययनेनैव साक्षात्कर्तुं शक्यते। एतादृशवेदेषु प्रयोगाः प्राचीनाः, विभिन्नाः धातुप्रयोगाः, पण्डितानां पामराणाञ्च हृदयसाम्राज्यं आकर्षति। केषाञ्चन शब्दप्रयोगानां विषये तथा धातुवैविध्ये च सिंहावलोकनं कुर्मः।*

वेदस्तु ज्ञानराशिः। शब्दाः अनेके, मन्त्राः विवधाः, अनेकाः देवताः, मन्त्रद्रष्टारो महर्षयः दैवांशसंभूताः, छन्दांसि अनोकानि, विभिन्नाः धातुप्रयोगाः, अनूह्याः प्रयोगाः विविधाः-एतत्सर्वं वेदाध्ययनेनैव साक्षात्कर्तुं शक्यते। वेदाध्ययनन्तु पूर्वपुण्यलभ्यम्, अर्थावगमनन्तु आचार्यानुग्रहफलम्, फलं तु गुरुश्रूषया श्रद्धायाः च मेलनेन अवश्यफललभ्यम्। एतादृशवेदेषु प्रयोगाः प्राचीनाः, विभिन्नाः धातुप्रयोगाः, पण्डितानां पामराणाञ्च हृदयसाम्राज्यं आकर्षति। केषाञ्चन शब्दप्रयोगानां विषये तथा धातुवैविध्ये च सिंहावलोकनं कुर्मः।

*** गातुवित्तमः**

देवानां सम्बोधनसन्दर्भे 'गातुवित्तम' इति प्रयोगः दृश्यते। अतिशयेन ज्ञानवान्-गातुवित्तम इत्यर्थः भाष्यकारैः वर्णितः। न केवलं तत्, अतिशयेन ज्ञानं कस्योपयोगाय इत्याशङ्कायां, सन्मार्गप्रवर्तने इत्यपि अर्थः निघण्टुकारैः निरुक्तकारैश्च वर्णितः। ये च सन्मार्गप्रवर्तकाः तथा प्रौढज्ञानिनः निरंकुशप्रणेतारो वा गातुवित्तमाः भवितुमर्हन्ति। लोके व्यावहारिकेऽस्मिन् तादृशाः ज्ञानिनः सन्मार्गप्रवर्तकाः अतिविरलाः देवतुल्याः लभ्यन्ते अंगुलीगणनयोग्याः, येषां शास्त्रे यादृशं पाण्डित्यम् अनितरसाधारणं ग्रन्थप्रणेतृत्वं सन्मार्गप्रवर्तनसामर्थ्यं येषु दृश्यते, ते च गातुवित्तमाः भवितुमर्हन्ति।

*** विप्रजूतः**

विप्रजूत इति कश्चन शब्दः वेदेष्वेवोपलभ्यते। विप्र इति प्रयोगः आधुनिके संस्कृतसाहित्ये ब्राह्मणजातौ रूढः परन्तु वेदे कुत्रापि नास्मिन्नर्थे प्रयुज्यते। विप्रशब्दस्य मेधावीत्यर्थः निरुक्तकारसम्मतः। येषां विवेचनशक्तिरस्ति स एव विप्रः। बुद्धिमत्सु रूढोऽयं शब्दः। जूतः-प्राप्तः, प्रेरितः चेत्यर्थाः भाष्यकारैरभिहिताः, जूतये-प्राप्तये इत्यर्थः तत्र तत्र मन्त्रेषु वर्णितः। तद्यथा ऋग्वेदे-

**शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः।।**[1]

मन्त्रेऽस्मिन्नपि जूतये-प्राप्तये इति विवरणं दत्तम्। समासोत्तरपदत्वेन जूतशब्दः प्रेरणार्थकः उपलभ्यते। वेदेषु अद्रिजूतः, आदित्यजूतः, इन्द्रजूतः, देवजूतः, बाहुजूतः, वातजूतः, श्येनजूतश्चेत्यादयः प्रयोगाः दरीदृश्यन्ते। तद्यथा-

**रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः।।**[2]
**दधानो शोमदश्ववत् सुवीर्थमादित्यजूत एधते।।**[3]
**यदङ्गत्वा भरताः संतरेयुर्गव्यन् ग्राम इषित इन्द्रजूतः।।**[4]
**महाँ ऋषिर्देवजा देवजूतोऽस्तभ्नात् सिन्धुमर्णवं नृचक्षाः।।**[5]
**युष्मदेति मुष्टिहा बाहुजूतो युष्मत्सदश्वो मरुतः सुवीरः।।**[6]
**वि वातजूतो आतसेषु तिष्ठते वृथा जुहूभिः सृप्या सुविज्वणिः।।**[7]
**अप्सु द्रप्सो वावृधे श्येनजूतो दुह ईं पिता दुह ईं पितुर्जाम्।।**[8]

*** ब्रह्माणि**

वेदेषु उपलभ्यमानाः शब्दाः धातवश्च अनेके प्रकरणानुसारेण अर्थं विभिन्नरूपेण बोधयन्ति, निरुक्तादिकारा अपि तत्र वैमत्यं प्रदर्शयन्ति। **उप ब्रह्माणि परिवः**[9] इत्यस्मिन् मन्त्रे ब्रह्माणि इति शब्दः उपलभ्यते। तस्य अर्थवर्णनावसरे भाष्यकाराः वेदरूपाणि स्तोत्राणि इत्यर्थं वर्णयन्ति। अन्ये च आचार्याः अन्नमित्यर्थं स्वीकुर्वन्ति। प्रकृते मन्त्रे तु अन्नार्थकत्वं न घटते इति स्तोत्रार्थकत्वमेव साधु भवति।

*** वाघतः**

किञ्च वेदे ऋत्विजार्थे वाघतः इति पदमुपलभ्यते। **उप ब्रह्माणि वाघतः**[10] इति भरता इत्यादिषु ऋत्विङ्नामसु वाघत इति पठितमिति भाष्यकाराः निरूपयन्ति। इदञ्च वाघतपदम् अधोलिखितेषु मन्त्रेष्वेवोपलभ्यते ऋग्वेदे–

**इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ।।**[11]
**होतारं सप्त जुह्वो 3 यजिष्ठं यं वाघतो वृणते अध्वरेषु।।**[12]
**एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टभति वाघतो न वाणी।।**[13]
**विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः।।**[14]
**द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति।।**[15]
**अर्वाचीनं सु ते मन उत चक्षुः शतक्रतो । इन्द्रं कृण्वन्तु वाघतः।।**[16]
**त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः।।**[17]
**मो षु त्वा वाघतश्चनाऽऽरे अस्मन्नि रीरमन्।**[18]
**नकीं वृधीक इन्द्र ते न सुषा न सुदा उत । नान्यस्त्वच्छूर वाघतः।।**[19]
**इन्द्रेण युदा निः सृजन्त वाघतो व्रजं गोमन्तमश्विनम्।**[20]
**न वः प्रतिमै सुकृतानि वाघतः सौधन्वना ऋभवो वीर्याणि च।।**[21]

अत्र सर्वत्रापि वाघतपदम् ऋत्विक्षु एव रूढमिति स्पष्टम्। अत्र ऋषीणाम् अर्थवर्णयितॄणां च मतभेदो नास्ति। देवतासु अत्यन्तं प्रसिद्धः देवेन्द्रः देवानां राजा, प्रथमं ब्रह्म ज्ञातवान् इत्याद्यनेकविषयाः वेदेषु प्रसिद्धाः।

*** चित्रभानो**

चित्रभानो इति इन्द्रस्य सम्बोधनं वेदे प्रसिद्धम्– **इन्द्रा याहि चित्रभानो सुता इमे त्वायवः अण्विभिस्तना पूतसः** इति प्रथमाष्टके प्रथमाध्याये वर्तते। मन्त्रेऽस्मिन् हे चित्रभानो–चित्रदीप्तः इन्द्रः अस्मिन् कर्मणि आ याहि–आगच्छ, सुना–अभिषुता–इमे सोमाः, त्वायवः–त्वां कामयमानाः वर्तन्ते इति सोमपानार्थम् इन्द्रस्य आह्वानमनेन मन्त्रेण क्रियते।

*** इन्द्रः**

उपर्युक्तमन्त्रे इन्द्रशब्दं निरुक्तकाराः बहुधा निर्वदन्ति। तथा हि निरुक्ते इत्थमस्ति–

**इशं दृणातीति वा, इशं ददातीति वा, इशं दास्यतीति वा, इन्दवे द्रवतीति वा, इन्द्रौ रमते इति वा, इन्द्रे भूतानीति वा, तत् एने समैन्धन् तत् इन्द्रस्य इन्द्रत्वम्। अयञ्च इन्द्रः दारयिता वा द्रावयिता वा दरयिता वा यज्ञानाम्।**[22]

अत्रायं विशेषः– दृ विदारणे इति धातुः इराम्–अन्नम् उद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति–मेघं विदीर्णं करोति इति इन्द्रः। दृ धातोः कर्तनम् इत्यर्थः। इरा नाम अन्नम्, तच्चान्नम् ओषधिवनस्पतियुक्तसस्यादिना लभ्यते। तच्च सस्यं वृष्ट्या वर्धते, जलेन संवर्धते च। तच्च जलं मेघजं, **तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापि अद्भ्यः पृथिवी पृथिव्यामोषधयः**[23] इत्यादि श्रुतिर्मानम्। तादृशस्य मेघस्य वृष्ट्यर्थं विद्युच्छक्त्या वा कर्तनात् कर्तनकारणत्वात् इन्द्रः इति नाम।

दु दाञ्ञ् दानम् इति धातुः इरामन्नं वृष्टिप्रदानेन प्रददातीति इन्द्रः। अर्थात् अन्नं वृष्टिप्रदानेन ददाति यः सः इन्द्रः। दाञ् पोषणार्थः। इरामन्नं–तृप्तिकारणं सस्यं दधातीति–जलप्रदानेन पुष्णातीति इन्द्रः अतः दा धातुः पोषणार्थकः। अन्नकारणीभूतं सस्यं जलप्रदानेन पोषयतीति इन्द्रः–इरामुत्पादयितुं–कर्षकमुखेन भूमिं विदारयतीति इन्द्रः अन्नोत्पादनार्थम् अपेक्षितं सस्यवर्धनार्थं निमित्तीभूतां भूमिं कर्षयतीति इन्द्रः।

पोषणमुखेन इरां धारयतीति विनांशराहित्येन स्थापयतीति इन्द्रः, सस्यादिकं पोषयित्वा तानि नाशराहित्येन संरक्षणं करोतीति इन्द्रः। इन्द्रः सोमवल्लीरसार्थं भूमिं प्रति धावतीति, यज्ञभूमिं प्रति धावतीति इन्द्रः। इन्द्रो सोमरसे रमते क्रीडतीत्यत इन्द्रः। इन्द दीप्ताविति धातुः – भूतानि प्राणदेहान् इन्धे जीवचैतन्यरूपेण अन्तःप्रविश्य दीप्यतीति इन्द्रः। इन्ध–धातोरर्थः प्रकाशकत्वम्। प्राणिशरीरेषु अन्तर्यामितया प्रविश्य चैतन्यरूपेण प्रविश्य शरीरादिषु कार्यं सम्पादयतीति इन्द्रः। यदस्मात् कारणात् एनं परमात्मरूपमिन्द्रं प्राणैः वाक्चक्षुरादीन्द्रियैः प्राणापानादिवायुभिश्च सहितं समैन्धन्नुपासकाः सम्यक् प्रकाशितवन्तः तस्मात् कारणात् इन्द्रः नाम सम्पन्नम्।

अन्यः आग्रायणो नामकः मुनिः इन्द्रो हि परमात्मरूपेण इदं जगत्करोति इन्द्रः। इदि परमेश्वर्ये इति धातुः– स्वमायया जगद्रूपत्वं परमैश्वर्यं–तद्योगादिन्द्रः। दु गताविति धातुः–शत्रूणां द्रावयिता पलायनं प्रापयते इति इन्द्रः। यागानुष्ठायिनां आदरयिता भयस्य परिहर्ता इति अनेकानि निर्वचनानि इन्द्रविषये वेदेषूपलभ्यन्ते।

चित्रभानो इति पदस्यार्थं विभिन्नाः भाष्यकाराः एकस्मिन्नेवार्थे प्रयुज्यन्ते। विचित्रतेजोयुक्त इत्ययमर्थः सर्वसम्मतः। इदञ्च विशेषणं अग्नीन्द्रसवितृवरुणानां प्रायः समानम्। एवं बहूनां पदानाम् अर्थवैशिष्ट्यं प्रकरणवशात् ज्ञातव्यम्। इत्थं वेदस्थविशिष्टपदानां व्युत्पतिप्रदर्शनेन तदर्थालोचनं कृतम्।

## पादटिप्पणी

1. ऋ.वे. 1.127.2
2. ऋवे. 3.58.8
3. ऋवे. 8.48.5
4. ऋवे. 3.33.11
5. ऋवे. 3.53.9
6. ऋवे. 5.58.5
7. ऋवे. 10.17.1
8. ऋवे. 9.89.2
9. ऋवे. 1.5.5
10. ऋवे. 1.3.5
11. ऋवे. 1.3.5
12. ऋवे. 1.58.7
13. ऋवे. 1.88.6
14. ऋवे. 1.110.4
15. ऋवे. 3.2.1
16. ऋवे. 3.37.2
17. ऋवे. 6.16.13
18. ऋवे. 7.32.1
19. ऋवे. 8.78.4
20. ऋवे. 10.62.7
21. ऋवे. 3.60.4
22. नि. 10.8
23. तै.उ. 2.1.1

## सन्दर्भग्रन्थसूची


1. सायणाचार्यः, ऋग्वेदसंहिताभाष्यम्, चौखम्बासंस्कृतसंस्थानम्, वारणासी 2002.
2. यास्काचार्यः, निरुक्तम्, चौखम्बासंस्कृतप्रतिष्ठान, दिल्ली, 2002.
3. वाचस्पत्यम्, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, 2002.
4. मेदिनीकोशः, चौखम्बासंस्कृत सीरीज, वाराणसी, 1968.
5. अमरसिंहः, अमरकोशः, चौखम्बासंस्कृत सीरीज, वाराणसी, 1968.
6. शङ्कराचार्यः, तैत्तिरीयोपनिषद्भाष्यम्, गीताप्रेस, गोरखपुर, 2002.



*निदेशकः परमाचार्यश्च, शास्त्रपरिरक्षणगुरुकुलम्,*
*राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः।*

ISSN 2582-2608

# उपनिषत्सु पुनर्जन्मविचारः

**प्रो. सतीशः के. एस्., पार्वती वि. जे.**

*शोधसारः-*

*मृत्युंजयता सर्वेषाम् अभीष्टा। किन्तु पुनः पुनः जननसम्भवे पुनः पुनः मृत्युंजयत्वं नापेक्षितम्, वेदान्तवाक्यजन्यब्रह्मात्मैक्यसाक्षात्कारे सति आत्यन्तिकजन्मराहित्यम् इति वेदान्तराद्धान्तः। एतत्साधनाय प्रथमं जन्म, तत्कारणं, पुनर्जन्मसम्भावना चेति सर्वं प्रदर्शनीयम्। अतः आलेखेऽस्मिन् जन्म-पुनर्जन्मविषयकं श्रुतिशिरः प्रतिपादनं प्रकाश्यते।*

मूल्यानि एव एकस्य समाजस्य निर्धारकतत्त्वानि। मानवस्य व्यवहारः मूल्याधिष्ठितः। व्यक्तित्वविकासः तदनु सामाजिकविकासश्च समुपार्जितमूल्याधारेण जायते। अयमेव धर्मः। तदेव मूल्यं अथवा धर्मः पशुपक्षिभ्यः मानवं पृथक्करोति। तदुक्तं महाभारते-

**आहारनिद्राभयमैथुनानि सामान्यमेतत् पशुभिर्नराणाम्।**
**धर्मो हि तेषाम् अधिको विशेषो धर्मेण हीनाः पशुभिः समानाः।।** इति।

अतः धर्मस्य अत्यन्तं महत्त्वं वर्तते मानवजीवने। एते धर्माः मानवीयजीवनमापकाः। भारतीयसंस्कृतिः तादृशमूल्यकेन्द्रिता वर्तते। वसुधैव कुटुम्बकम्, सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानतां, सह नाववतु सह नौ भुनक्तु इत्यादि भावनाः भारतीयसमाजस्य आधारशिलात्वेन गण्यन्ते।

अद्यत्वे भारते संस्कृतेः मुल्यच्युतिः परिदृश्यते। पूर्वं चतुर्विधपुरुषार्थप्रापकसत्कर्मानुष्ठानरताः असन् जनाः। किन्तु अद्यत्वे अर्थकामयोरेव रुचिर्वर्तते सर्वेषाम्। एकत्वभावना, सहजीविस्नेहः, अहिंसा इत्यादिकं अस्तङ्गतमिव। भूरिशः जनाः स्वोन्नतये एव प्रयतन्ते परोपकारापकारचिन्तां विनैव। वित्तमेव सर्वमिति भावनया तदाकाङ्क्षिणः सन् तदुपायान्वेषणे निरताः चरन्ति। धर्माधर्मविवेकहीनाः भूत्वा निषिद्धकर्मस्वपि निर्लज्जया व्यापृताः दृश्यन्ते। अस्य कारणं तु ते लोकान्तरं वा देहातिरिक्तम् आत्मानं नाङ्गीकुर्वन्तीत्येव।

अस्मिन् लोके वा लोकान्तरे वा कृतस्य कर्मणः फलं तेनैव अनुभोक्तव्यम् इति मतिं विना पुनः पुनः जननमरणचक्रे पतन्ति न मुच्यन्ते।

**श्रूयते च कठोपनिषदि-**

**न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।**
**अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे[1]।।**

ते स्वयं पण्डितं मन्यमानाः पुत्रवित्तलोकेषणात्रयबद्धाः अन्धेनैव नीयमानाः अन्धाः यथा विषमे पथि गत्वा महान्तं क्लेशम् अनुभवन्ति तद्वत् तमसाच्छन्नां गतिं प्राप्य पुनः पुनः संसारे निमज्जन्ति।

अतः इदानींतनसंसारस्य एतादृशपरिस्थितेः मूलकारणं तु जनानां पुनर्जन्मविषये विश्वासो नास्तीत्येव। स्वयं कृतस्य कर्मणः फलं स्वेनैव अनुभोक्तव्यं, तदनुसृत्यैव अग्रिमजन्मेत्यादिविषये तेषां सम्मतिः नास्ति। देह एव आत्मा इति विचिन्त्य तिष्ठन्ति। न चार्वाकवत्। यतो हि चार्वाकोऽपि राजा यथा आदिशति तथा कर्तव्यम् इति मनुते। मानविकमूल्याधिष्ठितमेव तेषां शास्त्रमपि। परन्तु अद्यत्वे जनः धर्मविषये ईषदपि आदरं न करोति। सार्वकारीयाः आरक्षकाः सामाजिकोद्धर्तारः वा भवन्तु ते अपि स्वीयलाभाय उत्कोचादिकं स्वीकृत्य स्वकर्तव्यं विस्मृत्य अधर्माचरणं

च निस्सङ्कोचं कुर्वन्ति। अद्यत्वे दुर्घटनाः, स्त्रीणां शिशूनाम् विषये दुराचाराः च संवर्धन्ते। अतः सम्प्रतिककालेऽस्मिन् भारतीयदर्शनानि विशिष्य उपनिषदः महत्प्राधान्यम् भजन्ते। यतो हि उपनिषत्सु नैकेषु प्रकरणेषु देहातिरिक्तस्य आत्मनः विषये स्वर्गादिलोकान्तराणां विषये च विस्तृततया प्रपञ्चितमस्ति। तत् कस्मै कस्मै उपयोगाय तत्तत् प्रकरणेषु पुनर्जन्मप्रतिपादितमिति मया अस्मिन् आलेखे विमृश्यते।

**''न साम्परायः प्रतिभाति बालं, तद्यथा तृणजलायुकाः तृणस्यान्तं गत्वा अन्यम् आक्रम्य आत्मानम् उपसंहरति, योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः, अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे, संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च, प्लवा ह्येते अदृढा यज्ञरूपा, मरणे सम्भवे चैव गत्यागमनयोरपि, एष ह्येव साधु कर्म कारयति''** इत्यादि बह्वीषु श्रुतिषु पुनर्जन्मविषये निरूपितमस्ति। यद्यपि उपनिषदः तात्पर्यं तु न जननमरणनिरूपणे। तथापि कर्मफलत्वेन, नीतिबोधकत्वेन, उत्तरायण-दक्षिणायनमार्गबोधकत्वेन, कर्मनिन्दकत्वेन, आत्मनः अजरामरत्वनिरूपणेन, जन्मत्रयनिरूपणेन, पञ्चाग्नि-उपासनानिरूपणेन, पूर्वप्रज्ञामहत्त्वबोधनेन, वैषम्य-नैर्घृण्यनिरासाय मुमुक्षोत्पादनाय च उपनिषत्सु पुनर्जन्मविषये निरूपितमस्ति।

**कर्मफलत्वेन-**

कृतकर्मफलोपभोगार्थं जीवस्य जन्मान्तरमवश्यम् अङ्गीकर्तव्या। यतो हि अस्मिन् जन्मनि यानि कर्माणि करोति जीवः तत्सर्वं तस्मिन्नेव जन्मनि अनुभोक्तुं न शक्नोति। तत्र पार्थिवशरीरस्य परिमितिः वर्तते। चतुर्दशतमवर्षादारभ्य आजीवनं जीवः अल्पाल्पतया दशजन्मनां कारणं कर्म करोति इति स्मर्यते।

**आचतुर्दशमाद्वर्षात् कर्माणि नियमेन तु।**
**दशावराणां देहानां कारणानि करोत्ययम्।।**

अतः कर्मणः भूयस्त्वात् लोकान्तरं गत्वापि कर्मफलम् अनुभवति जीवः इति अभ्युपगन्तव्यम्। अन्यथा कृतनाशाकृताभ्यागमदोषौ स्याताम्। तत्रैवं श्रूयते।

**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।**
**स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्**[2]।। इति श्रुतेः।

अर्थात् पूर्वजन्मार्जितकर्मफलानुसारं केषाञ्चन शरीराणां ग्रहणाय जीवः शुक्रबीजसमन्वितो भूत्वा देहिनः योनिं प्रविशति। अत्यन्तमधमं कर्म ये कृतवन्तः ते मरणानन्तरं वृक्षादिस्थावररूपेण जन्म प्राप्नुवन्ति। तथा चोक्तं भाष्ये - **यथाकर्म** यद्यस्य कर्म तद्यथाकर्म - यैर्यादृशं कर्म इह जन्मनि कृतं तद्वशेनेत्येतत् ।तथा **यथाश्रुतं** यादृशं च विज्ञानमुपार्जितं तदनुरूपमेव शरीरं प्रतिपद्यन्त इत्यर्थः; **यथाप्रज्ञं हि सम्भवाः**[3] इति श्रुत्यन्तरात्। **वर्णाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते** इति स्मृतेश्चेति।

**वैषम्य-नैर्घृण्य-निरासाय-**

देवादिभ्यः अत्यन्तसुखं, पश्वादिभ्यः अत्यन्तदुःखं, मनुष्येभ्यः सुखदुःखे च प्रयच्छतः परमात्मनः वैषम्यं, सर्वान् संहरतः निर्दयत्वं च प्रसज्येत। अतः **यो यः विषमसृष्टिकर्ता स दोषभाक्** इति न्यायेन जगत्कर्तुः ब्रह्मणः दोषरहितत्वं निरवद्यत्वं विरुद्ध्यते इति जिज्ञासायां- परमात्मा प्राणिकर्मफलमनुसृत्य सृष्टिसंहारौ कुरुते इत्यतः परमात्मनः वैषम्यनैर्घृण्यदोषौ न स्तः इति वैषम्यनैर्घृण्याधिकरणे उपस्थापितम्। सृष्टिसंहारयोः प्राणिकर्म अपेक्ष्यैव परमात्मनः कर्तृत्वम्। पापं कर्म करोति चेत् स्थावरसस्यादिजन्म प्राप्नोति। **तद्य इह रमणीयचरणाः......अथ य इह कपूयचरणाः कपूयां योनिमापद्यते**[4]**, पुण्यो वै पुण्येन कर्मणा पापः पापेन**[5] इत्यादि श्रुतेः।

किञ्च ये अधमं कर्म कुर्वन्ति तेभ्यः पातालादिलोकप्राप्तिः, पुण्यकर्मकुर्वतः स्वर्गाद्यूर्ध्वलोकप्राप्तिः इति च श्रूयते। **एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते**[6]।

परन्तु प्रथमसृष्टौ वैषम्यनैर्घृण्ये स्यातां खलु ईश्वरस्य इति जिज्ञासायाम् उच्यते, **धाता यथा पूर्वमकल्पयत्**[7] इति श्रुत्या **न रूपमस्येह तथोपलभ्यते न चादिर्न च संप्रतिष्ठा**[8] इति स्मृत्या च संसारस्य अनादित्वं सुष्ठु अवगम्यते। बीजाङ्कुरन्यायेन संसारस्य अनादित्वात् प्रथमसृष्ट्यनवगमात् कर्मणामप्यनादित्वात् ईश्वरस्य न विषमस्रष्टृत्वं वा नैर्घृण्यं वा।

**नीतिबोधकत्वेन–**

मनुष्यः समाजे सहवर्तित्वेन धर्मकर्मादिकं कृत्वा निषिद्धमकृत्वा वर्तेत इति नीतिकथनाय अपि पुनर्जन्मविषये प्रोक्तमस्ति उपनिषत्सु। श्रूयते च कठोपनिषदि–

**अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे ।**
**सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः**[9]।। इति।

यथा पूर्वं पितृपितामहादयः अन्ये साधवः जीवनं अकुर्वन् तान् दृष्ट्वा चिन्तयितुं शक्यते। यथा सस्यम् उत्पद्यते पच्यते म्रियते पुनः आविर्भवति तद्वत् जीवः अपि जायते कर्मसम्बन्धं प्राप्नोति म्रियते पुनः जायते च। इत्थम् एव प्रपञ्चनियमः। प्रपञ्चव्यवस्थानिरूपणाय पुनर्जन्मादिकम् अस्तीति अवश्यम् अङ्गीकर्तव्यम्। नो चेत् प्रपञ्चव्यवस्था न सुप्रतिष्ठिता भवति।

**उत्तरायण–दक्षिणायनमार्गबोधकत्वेन–**

मरणानन्तरं स्थूलशरीरं त्यक्त्वा जीवः सूक्ष्मशरीरमभ्युपैति। शरीरान्तरस्वीकारैव पुनर्जन्म। मरणानन्तरं लोकान्तरगमनार्थं मार्गाः सन्ति उत्तरायण–दक्षिणायनेत्यादि। उत्तरायणमार्गश्चेत् पुनरावृत्तिरहितः। दक्षिणायनमार्गश्चेत् पुनरावृत्तिसहितः। तत्र पितृयाणविषये श्रूयते– **संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च। तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजायन्ते। त एव पुनरावर्तन्ते तस्मादेव ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते। एष ह वै रयिर्य पितृयाणः**[10]। भगवत्पादीयं च भाष्यं स्पष्टीकरोति – 'इष्टं च पूर्तं च इष्टापूर्ते इत्यादि कृतमेवोपासते नाकृतं नित्यम्, ते चान्द्रमसमेव लोकम् अभिजयन्ते कृतरूपत्वाच्चान्द्रमसस्य। ते एव च कृतक्षयात् इमं लोकं पुनरावर्तन्ते हीनतरं वा विशन्ति। यस्मादेवं प्रजापतिमन्नात्मकं फलत्वेनाभिनिर्वर्तयन्ति चन्द्रमिष्टापूर्तकर्मणा प्रजाकामाः प्रजार्थिनः एते ऋषयः स्वर्गद्रष्टारः गृहस्थाः, तस्मात्स्वकृतमेव दक्षिणं दक्षिणायनोपलक्षितं चन्द्रं प्रतिपद्यन्ते। एष ह वै रयिः अन्नम्, यः पितृयाणः पितृयाणोपलक्षितश्चन्द्रः' इति।

**कर्मनिन्दकत्वेन–**

सर्वासाम् उपनिषदां तात्पर्यं तु अद्वितीये ब्रह्मण्येव न कर्मावबोधने। तर्हि कर्मप्रतिपादनं कुतः कुर्वन्ति उपनिषदः इति चेत् कर्मणः परम्परया मोक्षसाधकत्वमस्ति। चित्तशुद्धिसम्पादनाय उपकरोति कर्म। शुद्धे च चित्ते ज्ञानं प्रकाशते। ज्ञाने सति मोक्षः सिद्ध्यति। किञ्च कर्मजन्यफलवैराग्यसम्पादनाय च पुनर्जन्मप्रतिपादितमस्ति उपनिषत्सु। शुभं वा अशुभं वा कर्म भवतु। तस्य पुण्यपापादिफलभोगाय दुःखमये संसारे जननमरणावर्तनं भवत्येव। तस्मात् मुक्तिस्तु कर्मणा न भवति। यावत् कर्मफलं तिष्ठति तावत् संसारान्निर्गतिः न भवति। तादृशजननमरणसंतप्तसंसारनिवृत्त्यर्थं कर्मसु आसक्तिं त्यक्त्वा वैराग्यं सम्पादनीयम्। अविद्याकामकर्मकार्यम् अयं संसारः इत्यतः स दुःखमूलेति निन्द्यते अत्र। ये अस्थिरं विनष्टं कर्म श्रेयस्साधनम् इति मन्यन्ते ते अविवेकिनः मूढाः। अत एव जरामृत्युमनुभूय कञ्चित्कालं स्वर्गे स्थित्वा पुनरेवापियन्ति भूयोऽपि गच्छन्ति न संसारात् मुच्यन्ते। इत्थं कर्मैव दुःखमयस्य अस्य संसारस्य कारणम् इति निन्दा मुण्डकोपनिषदि श्रूयते।

**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।**
**एतच्छ्रेयो ये अभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति**[11]।।

**आत्मनः अजरामरत्वनिरूपणेन–**

उपनिषत्सु नैकत्र पुनर्जन्मविषये उद्धृतमस्ति। तर्हि आत्मनः जरामरणादिकम् अस्ति वा इति चेन्न इति वदन्ति उपनिषदः। केवलं शरीरस्यैव जरामृती स्तः। अविकृतं ब्रह्मैव अनाद्यविद्योपाधिना जीवभावं प्राप्नोति। अतः न तस्य अत्पत्तिविनाशौ। **स वा एष महानज आत्माऽजरोऽमृतः[12], अजो नित्यः शाश्वतोऽयं पुराणो[13]** इत्यादि श्रुतेः। यथा अग्नेः विस्फुलिङ्गाः व्युच्चरन्ति तथा परमात्मनः सर्वे जीवाः व्युच्चरन्तीति विस्फुलिङ्गदृष्टान्तेन शरीरस्य उत्पत्तिप्रलयौ जीवे उपचर्येते। यथा घटाकाशस्य जन्मनाशे सत्यपि महाकाशः तद्वदेव तिष्ठति न तस्य उत्पत्तिर्वा नाशो वा तद्वत् आत्मनः अपि शरीरस्य जन्मनाशगमनागमनस्थित्यादिसत्त्वेऽपि आकाशवत् आत्मा तिष्ठति। आत्मा तु आकाशवत् सर्वगतः नित्यश्चेत्यतः न तस्य उत्पत्तिप्रलयौ आशङ्कनीयौ। **आकाशवत्सर्वगतश्च नित्यः[14]** इति श्रुतेः। उक्तं च माण्डूक्योपनिषदि

**मरणे सम्भवे चैव गत्यागमनयोरपि।**
**स्थितौ सर्वशरीरेषु चाकाशेनाविलक्षणः[15]।।**

तस्मात् नात्मनः जरामरणादिकमस्तीति बोधयितुम् अपि अमुं मार्गं स्वीकुर्वन्ति उपनिषदः।

**पञ्चाग्न्युपासना निरूपणेन जन्मत्रयनिरूपणेन च–**

आरुणिपुत्रं श्वेतकेतुं प्रति पाञ्चालराज्ञा पृष्टेषु पञ्चप्रश्नेष्वन्यतमः **वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति[16]** इति। द्यु–पर्जन्य–पृथिवी–पुरुष–योषित्सु पञ्चसु अग्निषु श्रद्धा–सोम–वृष्टि–अन्न–रेतोरूपाः पञ्च आहुतीः प्रदर्श्य **इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति[17]** इति चोत्तरम्।

अर्थात् जीवः मरणानन्तरं पञ्चभूतानां सूक्ष्मांशैः वेष्टितः गच्छति। यतो हि अग्निहोत्रे श्रद्धया हुता दध्यादिरूपा आपः यजमानसंलग्नाः स्वर्गलोकं प्राप्य सोमरूपदिव्यशरीरयुक्ताः भूत्वा पुण्यकर्मक्षये सति वृष्टिरूपेण पृथिवीमागत्य अन्नरूपेण परिणताः पुरुषे प्रविश्य रेतोरूपं प्राप्य ऋतुकाले योषिति गर्भरूपेण प्रविश्य पुमात्मकाः भवन्ति। तथा हि पुरुषात्पुरुषो जायते।

येन कर्मणा चन्द्रलोकं गताः तत्रत्य कर्मक्षये सति तदितरकर्मविशिष्टाः भूत्वा अवरोहन्ति। तैः कृतकर्मणा व्रीहियवादिदेहं प्राप्य तदुपभोगक्षये व्रीह्यादिस्तम्बदेहविनाशे सति कर्मानुसृतं देहान्तरं प्राप्यते। व्रीहियवादिपर्यन्त–भावप्राप्त्यनन्तरं जीवस्य बहिर्निस्सरणमतीव कष्टकरम्। यतो हि व्रीह्यादिभावापत्त्यनन्तरमेव जीवानां बहिरागमने महान् कालः अपेक्षते। योग्यस्त्रीयोनौ रेतोगमनम् इत्यादि सर्वविधव्यवस्थाः संभूय तस्य पुनः बहिरागन्तुम् अवकाशप्राप्तिः। तत्रापि मनुष्यरूपेण जन्मप्राप्तिः बहु कष्टकरम्। **अतो वै खलु दुर्निष्प्रपतरम्[18]** इति श्रुतेः। अमुं विषयं निर्णेति **नातिचिरेण विशेषात्[19]** इति सूत्रे। श्रूयते च केनोपनिषदि–

**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।**
**भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति[20]॥** इति।

यदि मनुष्यः स्वस्य सत्यज्ञानानन्दरूपं परमार्थस्वरूपम् अवेदीत् तर्हि सः क्लेशकरात् जन्मजरामरणादिसंस्पृष्टात् मुच्यते। यदि मनुष्यजन्म प्राप्यापि ज्ञातुम् अशक्तः तर्हि अनन्ता विनष्टिस्संभवति। जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणां संसारगतिं स पुनः पुनः प्राप्नोति। न तस्य ततो मुक्तिः। अतः विद्वान् ब्रह्मणः एकात्मत्वं बुद्ध्वा अविद्यारूपादस्माल्लो–कादुपरम्य सर्वात्मैकभावमद्वैतनिष्ठः सन् अमृतो भवति, ब्रह्मैव भवतीत्यर्थः। **स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति[21]** इति श्रुतेः।

इत्थं मरणानन्तरं जन्मप्राप्तिः विवृता छान्दोग्योपनिषदि। तस्य जीवस्य जन्मत्रयं वर्तते इति वदति ऐतरेयम्। यथा – **पुरुषे ह वा अयमादितो गर्भो भवति। यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति**

**तद्यथा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म[22]। सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधि भावयति। स यत्कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म[23]। सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म[24]** इति।

अर्थात् पञ्चाग्निविद्याप्रकरणे उक्तवत् जीवः यज्ञादिकर्म कृत्वा लोकान्तरं गत्वा क्रमेण रेतो भूत्वा पुरुषे प्रविशति। तदेव तस्य प्रथमं जन्म। अनन्तरं रेतसा योषिद्गर्भं प्रविश्य यदा बहिरागच्छति तदानीं तस्य द्वितीयं जन्म। पिता जातं कुमारं जातकर्मादिना भावयति । सः पिता एषां लोकानाम् अविच्छेदार्थम् आत्मानमेव पुत्ररूपेण जनयित्वा भावयति। पिता पुत्रं शास्त्रोक्तकर्मनिष्पादनार्थं प्रतिनिधीय कृतकृत्यो भूत्वा ऋणत्रयविमुक्तः सन् म्रियते। सः अस्माल्लोकात् प्रयन्नेव कर्मानुसृतं शरीरान्तरम् उपादाय जलूकावत् पुनर्जायते। यदस्य मृतस्य तस्य पितुर्जन्म यत् तत् तृतीयं जन्म पितापुत्रयोरेकात्मत्वात् इति। एवं जन्मनः आवृत्तिं स्पष्टतया वक्तुं पूनर्जन्म निर्दिष्टमस्ति उपनिषत्सु।

**पूर्वप्रज्ञामहत्त्वबोधकत्वेन-**

यः जन्मान्ते कीदृशं भावं स्मृत्वा मरणम् आप्नोति सः तादृशमेवाग्रिमं जन्म प्राप्नोति।

**यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेबरम्।**

**तं तमेवैति कौन्तेय सदा तद्भावभावितः[25]।।** इति स्मृतेः।

अतः मरणकाले समीचीनभावनार्थं आजन्म धर्माद्यनुष्ठानं कुर्यात्। नो चेत् आसन्नमरणकालेपि सद्भावना नायाति मनसि। इत्थम् अग्रे समीचीनजन्मप्राप्त्यर्थं समीचीनं कर्मैव कुर्यात्। अन्यथा मरणानन्तरं सूक्ष्मशरीरेण नरकादिलोकं गत्वा अत्यन्तं पीटादिकं सोढ्वा कृमिकीटादिवत् निकृष्टां योनिमेव प्राप्नोति।

**आप्रायणात् तत्रापि हि दृष्टम्[26]** इति सूत्रे अहंग्रहोपासनादिकं कदाचित् कृत्वा न उपरमेत् यावज्जीवम् आप्रायणात् उपासकः तस्य प्रत्ययावृत्तिं कुर्यात्। तेनैव फलं प्राप्यते इति सिद्धान्तितमस्ति। अस्य फलस्वरूपेण लोकान्तरे तदनुगुणशरीरलाभः। पञ्चाग्निविद्यायां जन्मप्राप्तेः दौर्लभ्यं बोधितम्। पुनः तादृशजन्मप्राप्त्यर्थं पूर्वप्रज्ञायाः अपेक्षा अस्ति। तादृशप्रज्ञया सज्जन्मप्राप्तिः भवति। अजामिलोऽपि पूर्वकर्मवैशेष्यात् अन्तकाले नामसङ्कीर्तनेन विष्णुलोकं प्राप। अतः पूर्वप्रज्ञायाः अर्थात् उपासनाजन्यसंस्कारस्य फलमेव उत्कृष्टशरीरप्राप्तिः। अतः उपासनया एतादृशमहत्फललाभः अस्तीति द्योतयितुमपि पुनर्जन्म उपनिषत्सु वर्णितमस्ति। तृणजलायुकादृष्टान्तः प्रकृते उपपत्तिं दर्शयति।

**कुरु यत्नमजन्मनि**

कर्मणा संसारात् मुक्तिः न भवति। पुण्यं पापं कर्म वा भवतु द्वयोः फलं निश्चयेन अनुभोक्तव्यं भवति। तादृशकर्मणा पुनः पुनः संसारे पतनमेव भवति। कृतस्य कर्मणः फलम् अनुभोक्तुं जीवः शरीरं गृह्णाति। तेन शरीरेण कृतं कर्म अनुभोक्तुं मरणं प्राप्य शरीरान्तरं स्वीकरोति इत्येवं चक्रवत् जननमरणादिकम् अनुवर्तते।

अतः एतादृशसंसारगतिः क्लेशकरी इत्युक्तम्। तस्मात् वैराग्यं सम्पादनीयम्। तदुक्तं भाष्ये- 'यस्माच्च जन्ममरणजनितवेदनानुभवकृतक्षणाः क्षुद्रजन्तवो ध्वान्ते च घोरे दुस्तरे प्रवेशिताः सागर इव अगाधेऽप्लवे निराशाश्चोत्तरणं प्रति, तस्माच्चैवंविधां संसारगतिं जुगुप्सेत बीभत्सेत घृणी भवेत् मा भूदेवंविधे संसारमहोदधौ घोरे पात' इति।

अत एवोक्तं- **ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमा-पूर्यमाणपक्षाद्यान्षण्मासानुदङ्गादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं**

**तान्वैद्युतान्पुरुषो मानस एत्य ब्रह्मलोकानामयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः**[27] । इति।

अस्यां श्रूतौ विस्तरेण सर्वेषां जीवानां मार्गादिकं प्रतिपादितम्। ब्रह्मलोकगामिनामेव पुनरावृत्तिर्नास्ति। तर्हि पुनरावृत्तितः मोचनाय स्वस्वरूपेणावस्थितिरनिवार्या। सर्वोऽपि मृत्युना बिभेति। ततो मोचनार्थम् नैकान् मार्गान् अन्विषन्ति। जायते चेत् सुतरां म्रियते। तर्हि मा जायेत। जन्म नास्ति चेत् मरणमपि न भवति। तस्मात् तदर्थं कः उपायेति चिन्त्यम्।

कर्म क्रियते कर्मसु आसक्तिरस्ति चेत् तत्फलभोगाय जन्म भवति। तस्मात् कर्मसु जुगुप्सा सम्पादनीया। तत्र प्राचीनैः आचार्यैः उक्तमस्ति यत्

**मृत्योर्बिभेषि किं बाल भीतं किं मुञ्चते यमः।**
**अजातं नैव गृह्णाति कुरु यत्नमजन्मनि।।**

कर्मणा संसारात् मुक्तिः न भवति अपि तु बन्धनम् एव भवति। तस्मात् कर्मसु वैराग्यं प्राप्य ततो निवृत्त्या मोक्षमार्गः आश्रयणीयः। तदेव इतः मुक्त्यर्थम् उपायः। तादृशं श्रेयः प्राप्तुं संसारात् ततुं च औपनिषदं ज्ञानमेव। अतः स्वयंप्रतिपत्तिशाठ्येन पुनर्जन्मादिषु अविश्वासो नैव कार्यः। तेन नास्ति लाभलेशोऽपि। अतः तादृशकर्मभ्यः वैराग्यसम्पादनायापि कर्मणामानर्थक्यं दर्शयितुं पुनर्जन्मादिकम् उपदिष्टमस्ति उपनिषत्सु। अतः वेदोक्तधर्मकर्मेत्यादिपारलौकिकविषयेषु ईषदिवापि श्रद्धां सम्पाद्य पुनर्जन्मराहित्यं प्राप्नुयात्सकलोऽपि जीवः।

## पादटिप्पणी

1. कठोपनिषत् 1.2.6
2. कठोपनिषत् 2.5.7
3. ऐतरेयोपनिषत् 2.3.2
4. छान्दोग्योपनिषत् 5.10.7
5. बृहदारण्यकोपनिषत् 3.2.13
6. कौषीतकिब्राह्मणम् 3.8
7. ऋग्वेदसंहिता.10.190.3
8. भगवद्गीता.15.3
9. कठोत्पनिषत् 1.1.6
10. प्रश्नोपनिषत् 1.9
11. मुंडकोपनिषत् 2.7
12. बृहदारण्यकोपनिषत् 4.4.25
13. कठोत्पनिषत् 1.2.18
14. शतपथब्राह्मणम्.10.6.3.2
15. माण्डूक्योपनिषत् 3.9
16. छान्दोग्योपनिषत् 5.5.3
17. छान्दोग्योपनिषत् 5.9.1
18. छान्दोग्योपनिषत् 5.10.6
19. ब्रह्मसूत्रम्. 3.1.5.1
20. केनोपनिषत् 2.5
21. मुंडकोपनिषत् 3.2.9
22. ऐतरेयोपनिषत् .2.4.1
23. ऐतरेयोपनिषत् .2.4.3
24. ऐतरेयोपनिषत् .2.4.4
25. भगवद्गीता 8.6
26. ब्रह्मसूत्रम् 4.1.8
27. बृहदारण्यकोपनिषत् 6.2.15

*आचार्योऽध्यक्षश्च*
*अद्वैतवेदान्तविभागः, राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः।*
*शोधच्छात्रा*
*अद्वैतवेदान्तविभागः, राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः।*

ISSN 2582-2608

# तत्त्वविचारे सामोपनिषदां पात्रम्

डॉ. रा. सुब्रह्मण्य भिडे

***शोधसारः–***

*ईशादिदशोपनिषत्सु सामवेदसम्बद्धे केन–छान्दोग्येतिनाम्न्यौ द्वे उपनिषदौ गण्येते। अनयोर्द्वयोरुपनिषदोर्मध्ये छान्दोग्योपनिषत् विस्तृता सती चकासते। केनोपनिषदि देवतानामपि अहम्भावापनोदिका काचन आख्यायिका श्रूयते। तत्र अग्न्यादयो देवाः देवानां मध्ये ब्रह्मज्ञानादेव श्रेष्ठत्वं प्राप्नुवन्। इन्द्रोऽपि देवानामीश्वरोऽपि सन् ब्रह्मज्ञानादेव श्रेष्ठत्वं प्राप। देवता अपि भूत्वा क्लेशेनैव ब्रह्मतत्वं विदाञ्चक्रुः। ब्रह्मतत्त्वं दुर्विज्ञेयं वर्तते। किन्तु ब्रह्मतत्त्वं, अविज्ञातत्वात् 'असत्' इति मन्दबुद्धीनां व्यामोहो माऽभूदिति अनया आख्यायिकया श्रुतिरुपदिशति। ब्रह्मविद्यां हित्वा देवतानां यथा जयाद्यभिमानः सञ्जातः, तथा अस्माकं मानवानां ब्रह्मविद्याव्यतिरेकेण कर्तृत्व–भोक्तृत्वाद्यभिमानः, तेन च दुःखानुभूतिः भवति। ब्रह्मज्ञानेन च सर्वदुःखनाशो भवति। तथा च ब्रह्म विदित्वा, 'अमृता अमरणशीला भवन्ती'ति श्रुतिसिद्धान्तस्य उपस्थापनम् शोधलेखस्यास्य सारः।*

भारतदेशस्य भारतेतरदेशानन्यत्वं वैदिकसंस्कृत्या, वैदिकतत्त्व–चिन्तनेन च अभवदिति सकलं विश्वमप्यङ्गीकरोति। अत्र वैदिकं नाम वेदमूलकम् इति, वैदिकसंस्कृतिरित्युक्ते वेदोक्तकर्माचरणसंस्कृतिः तदविरुद्ध–लौकिकसंस्कृतिरिति च मन्तव्यम्। वैदिकतत्वचिन्तनम् नाम उपनिषदुक्तब्रह्मतत्त्वचिन्तनम् इत्यर्थः। ब्रह्मतत्त्वचिन्तनार्थं स्वीकृतेषु ईशावास्यादि–दशोपनिषत्सु सामवेदसम्बद्धा **छान्दोग्योपनिषत् तलवकारोपनिषत्** इति द्वे उपनिषदौ स्तः।

इमां तलवकारोपनिषदं **केनेषितं पतति प्रेषितं मनः**[1] इति उपनिषदः आरब्धत्त्वात् केनोपनिषदिति च पर्यायनाम्ना व्यवहरन्ति। बह्वीषु उपनिषत्सु सत्स्वपि इदं उपनिषद्द्वयं प्रधानभूतासु दशोपनिषत्सु गण्यते। यथा–

**ईश–केन–कठ–प्रश्न–मुण्ड–माण्डूक्य–तित्तिरिः।**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश॥** इति।

केनोपनिषदि खण्डिकाचतुष्टयं भवति। प्रथमखण्डिकायाम् (8) अष्टौ मन्त्राः, द्वितीयखण्डिकायां (5) पञ्च मन्त्राः, तृतीयखण्डिकायां (12) द्वादश मन्त्राः, चतुर्थखण्डिकायाम् (8) अष्टौ मन्त्राश्च भवन्ति। तृतीय–चतुर्थखण्डिकयोः देवतानाम् अहङ्कारापनोदकम् आख्यानं विद्यते।

प्रथमखण्डिका

**केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।**
**केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति॥**[2] इति

प्रश्नपूर्वकमारभ्यते। अर्थात् कस्य इच्छया मनः गच्छति? प्राणः केन युक्तः प्रैति? कस्य इच्छया वाचं वदन्ति? चक्षुः श्रोत्रं च स्व–स्वविषये केन देवेन युज्यत? इति भावः।

एतदनन्तरं

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः।**
**चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति॥**[3]

इत्यादिना उत्तरं ब्रूते श्रुतिः। ततश्च द्वितीयखण्डिका **यदि मन्यसे सुवेदेति**[4] आरभ्यते। खण्डिकान्ते च

**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।**
**भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति॥**[5]

इति मन्त्रे च, यथा पूर्वं बहुत्र मन्त्रेषु अमृता भवन्तीति फलश्रुतिरुक्ता तथैव फलश्रुतिस्तुत्या समापिता वर्तते।

ततश्च तृतीय–चतुर्थखण्डिकयोः देवानामपि अहम्भावापनोदिका आख्यायिका आरभ्यते। आख्यायिका चेयं अग्न्यादयो देवाः देवानां मध्ये ब्रह्मज्ञानात् श्रैष्ठ्यं प्रापुः। इन्द्रः ततोऽपि अतितरां श्रेष्ठत्वमाप। (येन) यस्मात् अतितेजसः अग्न्यादयोऽपि देवाः क्लेशेनैव ब्रह्म विदितवन्तः। इन्द्रश्च देवानामीश्वरोऽपि सन् क्लेशेनैव ब्रह्म विदितवान् इति, 'ब्रह्म च दुर्विज्ञेयम्' 'प्राणिनां ब्रह्मविद्याव्यतिरेकेण (अर्थात् आत्मज्ञानं विना) कर्तृत्व–भोक्तृत्वाद्यभिमानः मिथ्या' तथा 'इदं ब्रह्म अविज्ञातत्वात् असदेव' इति मन्दबुद्धीनां व्यामोहो माऽभूत् इत्येतदादि दर्शयितुं इयमाख्यायिका उपदिश्यते–

**ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त।**

**त ऐक्षन्ताऽस्माकमेवाऽयं विजयोऽस्माकमेवाऽयं महिमेति।**[6] इत्यादिना।

अख्यायिकायाः सारः एवं वर्तते–ब्रह्म कदचित् देवासुराणां सङ्ग्रामे जगदरातीन् धर्मव्यवस्थाभेत्तॄन् असुरान् जित्वा देवानां जयं ददौ। किन्तु, देवाः 'ब्रह्मणा वयं जयिनः अभूम' इति विषयम् अज्ञात्वा, 'अस्माकं महिमा' 'अस्माकं विजयः' इत्यविदुः।

एवं मिथ्याभिमानेन स्थितानां देवानां पुरतः ब्रह्म यक्षरूपेण प्रादुर्बभूव। किन्तु तद्यक्षं किमिति देवाः नाऽजानन्। तदा देवाः तद्यक्षं किमिति ज्ञातुं अग्निं प्रैषयन्। आगतमग्निं, यक्षं 'कोऽसि त्वमि'ति अपृच्छत्। तदा अग्निः 'अहं जातवेदाः' इत्युत्तरमदात्। ततः यक्षं त्वयि 'किं वीर्यमस्ति' इत्यग्निमपृच्छत्।

तदा अग्निः 'अहं सर्वं दहेयमि'ति उत्तरमवोचत्। तदा यक्षं अग्नेः पुरतः तृणं निधाय 'एतद्दह' इत्यवदत्। अग्निः स्वस्य सर्वप्रयत्नेनापि तत्तृणं दग्धुं न शशाक। ततः अग्निः व्रीडितः यक्षस्वरूपमज्ञात्वा देवानां समीपमागात्।

ततो देवाः वायुं प्रैषयन्। आगतं वायुं, यक्षं 'कोऽसि त्वमि'ति अपृच्छत्। अहं वायुः 'मातरिश्वा' 'अहं सर्वमपि गृह्णीयाम्' इति गर्वेणावदत्। तदा यक्षं वायोः पुरतः तृणं निधाय 'इदमादत्स्व' इत्यवादीत्। तदा वायुः स्वस्य सर्वप्रयत्नेनापि तत्तृणं स्वीकर्तुं न शशाक।

तत्पश्चात् देवाः इन्द्रं प्रैषयन्। किन्तु यक्षं 'इन्द्रस्य इन्द्रत्वाभिमानम् अतितरां निराकर्तव्य'मिति संवादमपि अकृत्वा तिरोबभूव।

तदानीं तत्रैव 'किमिदं यक्षमि'ति ध्यायतः इन्द्रस्य पुरतः काचित् बहु शोभमाना विद्या उमारूपिणी स्त्रीरूपा प्रादुरभूत्। तदा इन्द्रः तामेव उमां तिरोभूतं यक्षं किमिति अपृच्छत्। तदा सा इत्थमवदत्– **सा ब्रह्मेति होवाच। ब्रह्मणो वा एतद्विजये महीयद्ध्वमिति, ततो हैव विदाञ्चकार ब्रह्मेति।**[7] इति।

अर्थात् यत् भवद्भिः 'दृष्टम्' 'अनुभूतं' च तत् 'ब्रह्म' तद्ब्रह्मणैव असुरा जिताः, यूयं च तत्र निमित्तमात्रम्। युष्माकं मनसि 'अस्माकमेव विजयः' 'अस्माकं महिमे'ति यो भावो वर्तते सः मिथ्याभिमानः इत्युपदिदेश।

एवम् उमया बोधितः इन्द्रः ब्रह्मज्ञानात् शक्तिगुणादिमहाभाग्यैः अन्यान् देवान् अतिशेते। इन्द्रवाक्यात् लब्धज्ञानौ अग्नि–वायू अपि इतरदेवान् अतिशेराते इति इदं वाक्यं श्रुतिवाक्यं वक्ति– **तस्माद्वा एते देवाः अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति। तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति।**[8]

एवम् आख्यायिकामुक्त्वा श्रुतिः 'निरुपाधिकं ब्रह्म मन्दबुद्धिभिः आकलयितुं न शक्यमि'त्यतः तद्बुद्धिगम्यं भवत्विति, ब्रह्मणः अधिदैवतोपमात्वेन विद्युतः, अध्यात्मोपमात्वेन मनसः च उपमोपदेशं करोति। यथा विद्युत् निमेषणवत् अधिदैवतं द्रुतप्रकाशनधर्मि, अध्यात्मं च मनः प्रत्ययसमकालाभिव्यक्तिधर्मि' इति। अत्र श्रुतिवाक्यमेवं वर्तते– **तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा 3 इतीन्न्यमीमिषदा 2 इत्यधिदैवतम्। अथाऽध्यात्मम् यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः इति।**[9]

एवमस्यां तलवकारेत्यपरनाम्न्यां केनोपनिषदि **श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुरमृतस्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति**[10] इत्यादिभिर्वचनैः ब्रह्मतत्त्वं सुष्ठु प्रतिपादितं वर्तते।

सामवेदसम्बद्धा अपरा छान्दोग्योपनिषच्च अष्टभिरध्यायैर्युक्ता, प्रत्येकमध्यायोऽपि बहुखण्डयुक्तश्च भवति। इयं चोपनिषत्  ईशादि-दशोपनिषत्सु प्रमाणेन बृहत्तरा भवति। उपनिषदश्चास्याः तत्वविचारे नानाविषयसम्बद्धानि बहूनि वाक्यानि ब्रह्मसूत्रेषु बहुत्र विचार्यन्ते।

अत्र च प्रथमाध्याये उद्गीथावयवस्य ओङ्कारस्य उपासनम्, उद्गीथोपासनम्, साम्नः अवयवानां प्रस्ताव-प्रतिहार-स्तोभानामुपासनम्, द्वितीयाध्याये पञ्चविध-सप्तविधसाम्नामुपासनम्, गायत्र्यादिसाम्ना-मुपासनम्, तृतीयाध्याये आदित्योपासनम्, शाण्डिल्यविद्या, पुत्रस्य आयुरर्थं दीर्घजीवनार्थं च उपासनम्, मन-आकाश-ब्रह्मसु ब्रह्मदृष्टिः, चतुर्थाध्याये संवर्ग-षोडशकल-उपकोसलविद्याः, पञ्चमाध्याये प्राण-पञ्चाग्नि-वैश्वानरविद्याः, षष्ठाध्याये आत्मैकत्वज्ञानं, सुषुप्त्यवस्थाविचारेण जीवस्य सत्स्वरूपनिर्धारणम्, सप्तमाध्याये भूमविद्या, अष्टमाध्याये दहरविद्या, अवस्थात्रयविचारेण आत्मतत्त्वनिर्धारणम्, इत्येवं विषयाः व्याख्याताः।

अस्यामुपनिषद्येव 'तत्त्वमसि' इति वेदान्तेषु प्रसिद्धं महावाक्यं दृश्यते। इदं महावाक्यं प्रायः नवकृत्वः, नवविधप्रश्नोत्तरपुरस्सरं श्रूयते। 'उपासनार्थम् अनेकाः विद्याः, बह्वीभिः आख्यायिकाभिः तत्त्वनिर्धारणम्, नैकाभिः प्रक्रियाभिः तत्त्वनिर्धारणात् वेदान्ततत्त्वजिज्ञासूनां तत्त्वज्ञानार्थं केवलम् इयमेवैकोपनिषत् अलं भवती'ति वचने नातिशयः।

**निष्कर्षः-**

इत्थम् आत्मतत्त्वनिर्धारणे जगत्तत्त्वनिर्धारणे च इदं सामवेदीयम् उपनिषद्वयं साधकानां तत्त्वजिज्ञासूनां हृदये वेदान्तवाङ्मयराशौ च महत्तरस्थानं आप्नुवत् सत्, ज्ञानमार्गे पथप्रदर्शक-ज्ञानप्रदीपं सत् बभ्राजत इति शम्।

## पादटिप्पणी

1. केनोपनिषत् 1.1
2. केनोपनिषत् 1.1
3. केनोपनिषत् 1.2
4. केनोपनिषत् 2.1
5. केनोपनिषत् 2.5
6. केनोपनिषत् 3.1
7. केनोपनिषत् 1.4.1
8. केनोपनिषत् 1.4.2.-3
9. केनोपनिषत् 1.4.4-5
10. केनोपनिषत् 1.2

## परामृष्टग्रन्थाः


1. केनोपनिषत् 1.2

   Translator : Sri sachchidaanandenra sarasvati swami

   V Edition – 1994, अध्यात्मप्रकाशकार्यालयः,

   Holenaraseepur, Hasan Dist. K.A.State – 573211

2. छान्दोग्योपनिषत्

   Translator : Sri sachchidaanandenra sarasvati swami

   II Edition – 1986, अध्यात्मप्रकाशकार्यालयः,

   Holenaraseepur, Hasan Dist. K.A.State – 573211



*सहाचार्यः,*

*श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः*

ISSN 2582-2608

# समन्वयाधिकरणभाष्यस्य रत्नप्रभा-न्यायनिर्णयव्याख्यानयोः तुलनात्मकमध्ययनम्

**डॉ. श्रीकरः**

*शोधसारः-*

*भगवता बादरायणेन प्रणीतानां ब्रह्मसूत्राणां गभीरार्थगर्भितानां सुलभतया अवबोधाय निर्विशेषब्रह्मपरतया शङ्करभगवत्पादैः भाष्यं रचितम् । तच्च शारीरकमीमांसाभाष्यमिति प्रसिद्धम् । तस्य च शाङ्करभाष्यस्य सन्ति बहूनि व्याख्यानानि। व्याख्यानानामपि उपव्याख्यानानि नैकशः विराजन्ते । संप्रति सर्वत्र भारते शाङ्करभाष्यस्याध्ययने समादृतयोः रत्नप्रभा-न्यायनिर्णयव्याख्यानयोः समन्वयाधिकरणभाष्यस्य तौलनिकविमर्शः अत्र प्रस्तूयते।*

**उपोद्घातः-**

तत्र तावत् अनाद्यविद्यादावाग्निदग्धानां संसारसागरे निमग्नानां मानवानां हिततममुपदेष्टुं प्रवृत्तं वेदान्तशास्त्रमिति निर्विवादं समेषां विदुषाम्। चिरन्तनर्षिभिः चतुर्विधपुरुषार्थेषु नित्यनिरतिशयसुखस्वरूपः मोक्षः नितरां हिततमत्वेन निर्णीतः। स च जीवब्रह्मैक्यसाक्षात्कारलभ्यः इति अङ्गोपाङ्गसमेतानां सशिरस्कानां वेदानां सम्मतं मतम्। परापरेति विभक्तासु विद्यासु साक्षात्ब्रह्मतत्त्वप्रतिपादिका निःश्रेयसप्रयोजना परविद्या अध्यात्मविद्या ब्रह्मविद्या वेदान्तशास्त्रमिति सुप्रथितम् आपामरविद्वद्भ्यः।

तदिदं वेदान्तशास्त्रं श्रुतिप्रस्थानं स्मृतिप्रस्थानं सूत्रप्रस्थानञ्चेति प्रस्थानत्रयात्मकम्। उपनिषदः श्रुतिप्रस्थानम्, भगवद्गीता स्मृतिप्रस्थानम्, श्रुतिस्मृतिवचसां तात्पर्यं न्यायेन निर्णेतुं प्रवृत्तानि ब्रह्मसूत्राणि सूत्रप्रस्थानम्।

शङ्करभगवत्पादैः भगवता बादरायणेन प्रणीतानां ब्रह्मसूत्राणां निर्विशेषब्रह्मपरतया शारीरकमीमांसाभाष्यं विरचितम्।

तत्र चतुर्लक्षण्यां शारीरकमीमांसायां शास्त्रयोनित्वाधिकरणे प्रतिपादितस्य ब्रह्मणः शास्त्रप्रमाणकत्वस्य दृढत्वसम्पादनाय वेदान्तानां कार्यपरत्वनिरासाय च समन्वयाधिकरणं प्रवृत्तम्। जगदुत्पत्तिस्थितिलयकारणं सर्वज्ञं ब्रह्म वेदान्तशास्त्रादेवावगम्यते। तत्र हेतुमाह सूत्रकारः-'समन्वयात्' इति। सर्वाणि वेदान्तवाक्यानि तात्पर्येण ब्रह्मप्रतिपादने समनुगतानि इति तदर्थः।

अत्र आह रत्नप्रभाकारः-'समन्वयात्' इत्यत्र 'सम्' इति तात्पर्यस्य सम्यक्त्वम् अखण्डार्थविषयकत्वं सूचयति। तथा च अनुमानम्'अखण्डं ब्रह्म वेदान्तप्रमाविषयः, वेदान्ततात्पर्यविषयत्वात्, यो यद्वाक्यतात्पर्यविषयः सः तद्वाक्यप्रमेयः, यथा कर्मवाक्यप्रमेयो धर्मः' इति। अत्र असंसृष्टत्वं वाक्यार्थस्याखण्डत्वम्। स्वपदोपस्थिताः ये पदार्थाः तेषां यः संसर्गस्तद्गोचरप्रमाजनकत्वं वाक्यस्य च अखण्डार्थकत्वम्। न चेदमप्रसिद्धम्। यथा लोके 'प्रकृष्टप्रकाशश्चन्द्रः' इति अपर्यायानेकशब्दानामेकस्मिन् चन्द्रादिव्यक्तिमात्रे लक्षणया प्रमाहेतुत्वम्। सर्वपदलक्षणापि अविरुद्धा। यथा अनेकैः अर्थवादपदैः एकस्याः स्तुतेः लक्ष्यत्वाङ्गीकारात्। प्रकृते च सत्यज्ञानादिपदैः अखण्डं ब्रह्म लक्ष्यते। पूर्वोक्तानुमाने नापि हेत्वसिद्धिः, यतः उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैः अशेषवेदान्तवाक्यानाम् अखण्डे ब्रह्मणि तात्पर्यनिर्णयात् इति । इदं च विस्तृतं व्याख्यानं न्यायनिर्णये न दृश्यते।

अत्रैव पुनः रत्नप्रभाकारेण छान्दोग्यस्थवाक्यानां ब्रह्मणि समन्वयप्रदर्शनाय षड्विधतात्पर्यलिङ्गानि सुस्पष्टं न्यरूपिषत। तात्पर्यलिङ्गानि यथा-

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥** इति।

छान्दोग्यषष्ठाध्याये यथा– **एकमेवाद्वितीयम्**[1] इति ब्रह्मोपक्रम्य **ऐतदात्म्यमिदं सर्वम्**[2] इत्युपसंहारः। इदमुपक्रमोपसंहारैकरूप्यं तात्पर्यलिङ्गम्। प्रकरणप्रतिपाद्यस्य ब्रह्मणः मध्ये **तत्त्वमसि**[3] इति नवकृत्वोऽभ्यासः। **अत्र वाव किल सत्सोम्य न निभालयसे**[4] इति रूपादिहीनस्य अद्वितीयब्रह्मणः प्रमाणान्तरागोचरत्वमपूर्वत्वमुक्तम्। **तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये**[5] इति ब्रह्मज्ञानात् स्वरूपप्राप्तिरूपमोक्षः फलमुक्तम्। **अनेन जीवेनात्मनानुप्रविश्य**[6] इत्यादिना ब्रह्मणः अद्वितीयज्ञानार्थोऽर्थवादः। **वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्**[7] इत्यादिमृदादिदृष्टान्तैः कार्यकारणयोरनन्यत्वात् कारणव्यतिरेकेण कार्याभावरूपोपपत्तिरुक्ता। एवं सर्वत्र वेदान्तेषु तात्पर्यलिङ्गानि द्रष्टव्यानि इति।

ब्रह्मणः मानान्तरायोग्यत्वात् शास्त्रैकप्रमाणगम्यत्वं प्रतिपाद्य वर्णकान्तरमारब्धं भाष्ये 'तत्रापरे प्रत्यवतिष्ठन्ते' इत्यादिना।

अत्र रत्नप्रभाकारः आह– सर्वेषां लौकिकवैदिकपदानां कार्यान्वितार्थे एव शक्तिग्रहसम्भवात् वेदान्ताः विधिशेषत्वेन ब्रह्म बोधयन्ति न स्वातन्त्र्येण इति वदतां वृत्तिकाराणां मतनिरासाय वर्णकान्तरमिति।

न्यायनिर्णयकारस्तु सिद्धं वस्तु शाब्दमिति वदतां वेदान्तानाम् उपास्तिविधिशेषत्वमिच्छतां मतनिरासाय वर्णकान्तरमित्युक्त्वा पक्षान्तरमपि अभिव्यनक्ति–यद्वा, आरोपितब्रह्मत्वस्य जीवस्य उपास्तिपराः वेदान्ताः न ब्रह्मात्मत्वे मानमिति पक्षं प्रतिक्षिप्य वेदान्तानां वस्तुनि मानेऽपि तद्विधिद्वारैव इति विशेषमाशङ्क्य वर्णकान्तरमिति।

मोक्षप्रतिबन्धकमिथ्याज्ञाननिवृत्तिरेव ब्रह्मज्ञानस्य फलमिति उक्त्वा– **तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रम्– 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः**[8] इति न्यायसूत्रं भाष्यकारैः उद्धृतम्। तत्र व्याख्यानद्वये इत्थं विचारः प्रवृत्तः–तद्यथा रत्नप्रभायाम्– **तत्त्वज्ञानान्निःश्रेयसाधिगमः**[9] इति पूर्वसूत्रे उक्ते सति कथम् इतरपदार्थभिन्नात्मतत्त्वज्ञानात् मोक्षः इत्याकाङ्क्षायां मिथ्याज्ञाननिवृत्तिद्वारेण इति प्रतिपादनाय 'दुःखजन्म' इत्यादिसूत्रं प्रवृत्तम्। किन्तु भिन्नात्मज्ञानात् मोक्षं वदत् सूत्रम् अद्वैतसिद्धान्तपरतया कथमुद्धृतमिति विचार्य भाष्ये एव उक्तम्– 'मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वज्ञानाद्भवति' इति। अर्थात् तत्त्वज्ञानात् मोक्ष इत्यस्मिन्नंशे न्यायसूत्रस्य सम्मतिरुक्ता। न तु भिन्नात्मज्ञानात् मोक्ष इत्यंशे। **यत्र हि द्वैतमिव भवति**[10] इति श्रुत्या भेदज्ञानस्य भ्रान्तित्वात्, **मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति**[11] इति श्रुत्या अनर्थहेतुत्वाच्च न भेदज्ञानात् मोक्ष इति भाष्यस्य आशयो व्याख्याकारेण प्रकटितः।

न्यायनिर्णये तु–'तत्त्वज्ञानं मिथ्याज्ञानविपर्ययेण व्याख्यातम्' इत्युपक्रम्य 'आत्मनि तावदस्तीत्यनात्मन्यात्मेति दुःखेऽनित्येऽत्राणे समये जुगुप्सिते हातव्ये यथा विषयं वेदितव्यम्' इत्यादिन्यायभाष्यानुसारेण मिथ्याधीविरुद्धा भेदधीरेव तत्त्वधीः तर्कशास्त्रेऽभीष्टा तया च मोक्ष इति गम्यते। तत्कथं ब्रह्मात्मैक्यज्ञानात् मिथ्याज्ञाननिवृत्तिरिति वदता वेदान्तशास्त्रस्य न्यायशास्त्रानुगुण्यत्वमित्यत्राह–'मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वज्ञानाद्भवति' इति। भेदज्ञानस्य अविद्याकल्पितत्वात् मिथ्याज्ञानाप्रतिपक्षत्वम्। तथा च ब्रह्मात्मैक्यज्ञानादेव तन्निवृत्तिरिति।

ब्रह्मात्मैकत्वविज्ञानस्य सम्पदादिरूपं निराकृत्य भाष्यकारैरुक्तम्– 'सम्पदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युगम्यमाने **तत्त्वमसि**[12], **अहं ब्रह्मास्मि**[13], **अयमात्मा ब्रह्म**[14] इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत' इति।

अत्र रत्नप्रभायाम्– ब्रह्मात्मैकत्वविज्ञानस्य न सम्पदध्यासक्रियायोगसंस्काररूपत्वमिति प्रतिज्ञाचतुष्टये हेतुमाह– 'सम्पदादि' इति संक्षेपेण व्याख्यातम्।

अत्र न्यायनिर्णये किञ्चित् वैशिष्ट्यं दृश्यते। तद्यथा– सम्पदादीनां प्रतिज्ञामात्रेण न अयोग इति आक्षिप्य जीवब्रह्मणोरभेदपरकवेदान्तानां स्वार्थे मानान्तरविरोधात् ब्रह्मात्मैकत्वविज्ञानस्य सम्पदादिरूपत्वम् उत तात्पर्याभावाद्वा इति विकल्पः कृतः। तत्र जीवब्रह्मणोर्मानान्तरागोचरत्वात् तयोरभेदोऽपि तादृशः, अपि च भेददृष्टेः बिम्बप्रतिबिम्बवदविरोधात् नाद्यः। तात्पर्याभावाद्वा इति द्वितीयविकल्पनिरासाय आह–'सम्पदादिरूपे हि' इत्यादि। अत्र न्यायनिर्णयकारैः तात्पर्यलिङ्गैः बहुत्र वेदान्तानां ब्रह्मणि समन्वयः प्रादर्शि। तद्यथा बृहदारण्यके **ब्रह्म वा इदम्** इत्युपक्रम्य **अयमात्मा ब्रह्म** इति ब्रह्म

परामृश्य **पूर्णमदः पूर्णमिदम्** इत्येकत्वेनोपसंहारः। **स एव नेति नेत्यात्मा** इति अभ्यासः। ब्रह्मातिरिक्तस्य सर्वस्य निषेधात् निष्प्रपञ्चब्रह्मणः अपूर्वत्वम्। **तस्मात्तत्सर्वमभवत्** इत्यादिफलश्रुतिः। **स एष इह प्रविष्टोऽथ योऽन्यां देवताम्** इत्याद्यर्थवादः। दुदुभ्यादिदृष्टान्तः उपपत्तिः। एवमेव ऐतरेयके तैत्तिरीयके च न्यायनिर्णयकारेण तात्पर्यलिङ्गानि प्रदर्शितानि। एवं वेदान्तानां ब्रह्मात्मैकत्वे तात्पर्यावधारणात् न तेषां स्वार्थे तात्पर्याभावकृता सम्पदादिरूपता। पूर्वं रत्नप्रभायामपि छान्दोग्ये अद्वितीये ब्रह्मणि तात्पर्यलिङ्गानि प्रदर्शितानि। एवं व्याख्यानद्वयेऽपि 'समन्वयात्' इति हेतुः सुस्पष्टं समर्थितः।

वेदान्तानां निषेधवाक्यवत् सिद्धार्थपरत्वमाह भाष्यकारः-'अपि च **ब्राह्मणो न हन्तव्यः** इत्येवमाद्या निवृत्तिरोपदिश्यते। न च सा क्रिया' इत्यादि।

अस्याः पङ्क्तेः विवरणं रत्नप्रभायामुपलभ्यते। तद्यथा- **ब्राह्मणो न हन्तव्यः** इत्यत्र प्रकृत्यर्थेन सम्बद्धस्य नञः हननाभाव इत्यर्थः। 'हन्तव्यः' इति इष्टसाधनत्वं तव्यादिप्रत्ययार्थः। इष्टश्च नरकदुःखाभाव अत्र विवक्षितः। तथा च दुःखाभावपरिपालको हननाभाव इति निषेधवाक्यार्थः। अनेन वाक्येन हननाभावस्य दुःखाभावहेतुत्वस्य उक्तत्वात् हननस्य दुःखसाधनत्वधिया पुरुषः हननात् निवर्तेत। अत्र न कश्चित् नियोगः विवक्षितः। यतः नियोगस्य क्रियातत्साधनादिविषयत्वात्, अत्र च नञ्वाच्यायाः हननाभावरूपायाः अक्रियात्वात्, अभावस्य भावार्थहेतुत्वात् क्रियासाधनत्वाभावाच्च। अतः निषेधशास्त्रस्य सिद्धार्थे प्रामाण्यवत् वेदान्तानां सिद्धे ब्रह्मणि प्रामाण्यम् इति। इदं विवरणं न्यायनिर्णये नोपलभ्यते।

भाष्यपङ्क्तीनां सरसतया अवगमाय साम्प्रदायिकाः न्यायनिर्णयव्याख्यानं रत्नप्रभाव्याख्यानं च समाश्रयन्ते। न्यायनिर्णयव्याख्यानं रत्नप्रभाव्याख्यानात् प्राचीनतरम्। भाष्यपङ्क्तीनां निःसन्दिग्धतया अवगमाय एतद्व्याख्यानद्वयम् अत्यन्तमुपकारकम्। उभयोः व्याख्यानयोः सैद्धान्तिकविरोधः नास्त्येव। उभयोः वैषम्यापेक्षया साम्यमेवाधिक्येन दृश्यते। रत्नप्रभायाः सुललिता भाषा, सरला शैली, इदं व्याख्यानं विवरणप्रस्थानानुसारि। न्यायनिर्णयस्य तु शैली प्रौढा। न्यायनिर्णयकाराः प्रतिपाद्यविषयान् अवतरणिकात्मना निरूपयन्ति। सूत्रभाष्यसूचितस्थलेषु अनुमानाकारं प्रदर्शयन्ति। एते आचार्याः न विवरणप्रस्थानं न वा भामतीप्रस्थानमनुसरन्ति किन्तु स्वतन्त्रतया भाष्यं व्याख्यान्ति। प्राचीनस्य न्यायनिर्णयस्य प्रभावः अर्वाचीनायां रत्नप्रभायां दरीदृश्यते।

## पादटिप्पणी

1. छान्दोग्योपनिषद्6/2/1
2. छान्दोग्योपनिषद्6/6/3
3. छान्दोग्योपनिषद्6/8/7
4. छान्दोग्योपनिषद्6/13/2
5. छान्दोग्योपनिषद्6/14/2
6. छान्दोग्योपनिषद्6/3/2
7. छान्दोग्योपनिषद्6/1/4
8. न्यायसूत्रम्1/1/2
9. न्यायसूत्रम्1/1/1
10. बृहदारण्यकोपनिषद्2/4/14
11. कठोपनिषद्2/1/10
12. छान्दोग्योपनिषद्6/7/8
13. बृहदारण्यकोपनिषद्1/4/10
14. माण्डूक्योपनिषद्1/2

## आधारग्रन्थसूची


1. ब्रह्मसूत्रशाङ्करभाष्यम्-आचार्यजगदीशशास्त्री, मोतिलाला बनारसिदास, दिल्ली 2005
2. ब्रह्मसूत्रशाङ्करभाष्यम्-श्रीवासुदेवशर्मा, राष्ट्रियसंस्कृतसंस्थानम्, नवदिल्ली 2002
3. ईशादिदशोपनिषदः - मोतिलाला बनारसिदास, दिल्ली 2000
4. श्रीमद्भगवद्गीता-गीताप्रेस्, गोरखपुर
5. अद्वैतवेदान्तः-डॉ. राममूर्ति शर्मा, ईस्टर्न बुक् लिंकर्स्, दिल्ली 1998
6. शाङ्करदर्शनमर्मप्रकाशः-कृष्णाजोयिस्, राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति 1996



*सहायकाचार्यः,*

*अद्वैतवेदान्तविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, एकलव्यपरिसरः, अगरतला, त्रिपुरा।*

ISSN 2582-2608

# दर्शनशास्त्रीयः व्यक्तित्वविमर्शः

डॉ. सत्यदेवः

***शोधसारः-***

*भारतीयज्ञानपरम्परायां शिक्षाक्षेत्रे च दर्शनशास्त्रं महदुपकरोति। शिक्षादर्शनम् आवश्यकतां, भाषाप्रकृतिं, प्रयोगक्षेत्रम्, आर्थिकस्थितिं, भौगोलिकपरिस्थितिं च संपश्य एव प्रतिविषयकं पाठ्यपुस्तकं पाठ्यक्रमं वा प्रवर्तयितुं निर्दिशति। अतः एवंभूतस्य दर्शनशास्त्रस्य अथ च शिक्षादर्शनस्य दार्शनिकाधारं सामाजिकाधारं च आधारीकृत्य शिक्षामनोविज्ञाननिहितविषयस्य सहकारेण दर्शनशास्त्रीयं व्यक्तित्वविमर्शं कर्तुं मनोक्रियते शिक्षामनोविज्ञाने नैकानि उद्धरणानि परिभाषाः अभिकथनानि च व्यक्तित्वमुद्दिश्य वर्णितानि वर्तन्ते। संस्कृतवाङ्मये अपि विविधशास्त्रेषु व्यक्तित्वमुद्दिश्य नैके प्रयत्नाः कृताः सन्ति।*

**भूमिका**- शिक्षामनोविज्ञाने व्यक्तित्ववर्णनं प्रधानतया प्रतिपादितं वर्तते। 'वि'[1] उपसर्गपूर्वकम् अञ्जधातोर्निष्पन्नं व्यक्तित्वमिति पदमिदं, यत् वस्तु दृग्गोचरं भवति तत् कथयति। घटपटादयः अजीवाः पदार्थाः पशुपक्ष्यादयः सजीवाः पदार्थाश्च अस्य पदस्य अभिधेयाः भवन्ति। सर्ववाचकमपि इदं पदं मनोविज्ञाने प्रकरणवशात् मानवव्यक्तिरेवाभिदधाति। तथा च व्यक्तिपदेन पृथक् स्थितः मानवः अभिप्रेयते। तस्य यः भावः वर्तते असाधारणः, स एव व्यक्तित्त्वमिति पदेनोच्यते।

**दर्शनशास्त्रे व्यक्तित्वम्**- मेषैः सह परिचयहीनानामस्माकं, शाद्वलेषु शादं चरन्तः सर्वेऽपि मेषाः समानाः एव भान्ति। मेषत्वजातिं दृष्ट्वा ''षोडशपदार्थीविद्यान्यायः''[2] शिक्षामनोविज्ञाने व्यक्तित्त्ववर्णनं प्रधानतया प्रतिपादितं वर्तते। ''वि'' उपसर्गपूर्वकम् अञ्जधातोर्निष्पन्नं व्यक्तिरिति पदमिदं यत् वस्तु दृष्टिगोचरं भवति तत् कथयति। घटपटादयः अजीवाः पदार्थाः पशुपक्ष्यादयः सजीवाः पदार्थाश्च अस्य पदस्य अभिधेयाः भवन्ति। सर्ववाचकमपि इदं पदं मनोविज्ञाने प्रकरणवशात् मानवव्यक्तिरेवाभिदधाति। तथा च व्यक्तिपदेन पृथक् स्थितः मानवः अभिप्रेयते । तस्य यः भावः वर्तते असाधारणः सः एव व्यक्तित्त्वमिति पदेनोच्यते।

मेषैः सह परिचयहीनानामस्माकं शाद्वलेषु शाद चरन्तः सर्वेऽपि मेषाः समानाः एव भान्ति। मेषत्वजातिं दृष्ट्वा ''पोडशपदार्थीविद्यान्यायः'' इत्यन्त्र छल-जाति-निग्रहप्रभृतपदार्थसत्तामूलात् इमे मेषाः इति संज्ञानं भवति। मेषपालस्तु स्वकीयस्यैकैकस्यापि मेषस्यासाधारणं धर्मम् (चिह्न) अपि जानाति। अतः एव सम्भूयचरतां स्वमेषाणाम् अन्यमेषाणां च मध्ये स्वकीयान् मेषान् पृथक् कर्तुं शक्नोति सः। एवम् एकैकं मेषं पृथक् कर्तुं यो धर्मो वर्तते, तस्य व्यक्तित्त्वं, व्यक्तिः, पृथगात्मता वा इति नाम। अमरकारः जातिग्रत च सामान्यं व्यक्तिस्तु पृथगात्मता इत्याह। पदनिष्पादनप्रक्रियायां ज्ञातायामपि व्यक्तित्वस्य वास्तविकस्वरूपं लक्षणादिभिरपि ज्ञातव्यमेव। आंग्लभाषायां व्यक्तित्वपदस्य समानार्थकं पदं परसनॅलिटि'[3] (personality) इति वर्तते। पर्साना इदं पदं ग्रीकभाषापदात् निष्पन्नम्। पूर्व नटाः पात्राभिनयाय तत्पात्रानुगुणं मुखावरणं (Mask) किमपि धरन्ति स्म। मुखावरणवाचि इदं पदं तदनन्तरकाले तत्पात्रगुणवाचि अभवत्। कालक्रमेण मानवानां ये असाधारणाः गुणाः वर्तन्ते तद्वाचि जातम्।

मनोवैज्ञानिकानां कथनं वर्तते यत् व्यक्तित्वं नाम मानवगुणानां लक्षणानां, क्षमतानां, विशेषतानाञ्च समन्वितं रूपमिति। ''मनमहोदयमतेन व्यक्तित्वपरिभाषा''[4] व्यक्तेः शारीरिकसंरचनाः व्यवहारविधयः, रुचयः, अभिवृत्तयः, क्षमताः, योग्यताः कुशलताश्च इत्येतेषां विशिष्टीकरणरूपेण क्रियते''। आलपोर्टमहाभागानुसारं व्यक्तित्वं मनोदैहिकव्यवस्थानां तत् गत्यात्मकसङ्घटनं वर्तते यत् वातावरणेन सह तस्य अपूर्वसमायोजनं निर्धारितं करोति।

मार्टन - प्रिन्स-महोदयानुसारं व्यक्तित्त्वं समस्तजैविकानां जन्मजातप्रवृत्तीनाम् इच्छानां मूलप्रवृत्तीनां च योगः अस्ति तथा च अस्मिन् अनुभवेन प्राप्तार्जित-प्रवृत्तयः अपि सम्मिलिताः सन्ति। व्यक्तित्वप्रकाराः

**विद्वद्भिः प्रतिपादितेषु व्यक्तित्वप्रकारेषु त्रयः प्रकाराः प्रमुखाः वर्तन्ते।**

(1) शरीररचनाप्रकार: (Constitution Types )

(2) समाजशास्त्रीयप्रकार: (Sociological Types)

(3) मनोवैज्ञानिकप्रकार: ( Psychological Types)

**1. शरीररचनाप्रकारः**- केचमरमहोदयमतेन

* दौर्बल्यम्- अस्मिन् व्यक्तित्वे क्षीणाः, लम्बायमानाः जनाः भवन्ति ये शीघ्रकोपिनः निराशाप्रवृत्तियुक्ताः परेषाम् आलोचने प्रवृत्तः आत्मालोचनश्रवणे च असमर्थाः भवन्ति।
* सुदृढशरीरम् (Athletic) शरीरेण सुघटिताः स्वस्थाश्च एते जनाः दृढनिश्चय-आत्मविश्वास समायोजनकौशलयुताः च भवन्ति
* वृत्तकायम्-(Pyknic) आकारेण लघुः स्थूलकायः मांसयुक्तः च भवति। जनाः स्वभावेन प्रसन्नाः विश्रामप्रियाश्च परस्परमेलनभावनावन्तः च भवन्ति
* मिश्रिताः-(Dysplastic) कतिपयाः उक्तगुणसमन्विताः अपि भवन्ति।

**2. समाजशास्त्रीयप्रकारः**- (Sociological Types ) स्पेन्गार महोदय-मतानुसारेण

(1) सैद्धान्तिकाः (The Theoretical) एते तत्वदर्शनरुचयो वर्तन्ते। अनुसन्धानमेषां स्वभावः प्रायेण वैज्ञानिकाः आविष्कर्तारश्च एतादृशाः भवन्ति

(2) राजनैतिका (The Political) समाजकार्येषु श्रद्धावन्तः एते आत्मनः प्रभुत्वसम्पादने रुचिमन्तः भवन्ति। देशनेतारः एतादृशाः भवन्ति।

(3) आर्थिकाः (The Economic) एते जनाः धनस्य कृते महत्त्वं ददति। वस्तूनाम् उत्पादने विक्रयणे अन्येषु च एतादृशेषु कार्येषु एषामासक्तिः भवति । वणिजः औद्योगिककर्मरताः धनार्जनप्रियाश्च मानवाः अस्मिन् वर्गे आयान्ति।

(4) धार्मिकाः (The Religious) एतषां मते धर्मे भगवद्भक्तौ निष्कामकर्मकरणे च आसक्ताः भवन्ति एतादृशाः जनाः साधवः, पुरोहिताः, भक्तगणाः, धार्मिककार्यरताश्च भवन्ति।

(5) सामाजिकाः (The Social) इमे जनप्रियाः जनसेवायां हितकरणे च आसक्ति प्रदर्शयेयुः । एषु सहानुभूति-सहिष्णुता समाजसेवा इत्यादयः गुणाः आधिकयेन भवन्ति ।

(6) कलारसिकाः (The Aesthetics) कलासु, गीते, साहित्ये नाटकादिषु च एतेषामासक्तिः भवति ।

**3. मनोवैज्ञानिकप्रकारः**-

मनोवैज्ञानिकवर्गीकरणे व्यक्तित्वविषये युंगमहोदयस्य वर्गीकरणं प्रसिद्धं वर्तते। युंगमहोदयेन व्यक्तित्वं प्रकारेण द्विधा प्रतिपादितम्।

1. अन्तर्मुखिव्यक्तित्वम्- अन्तर्मुखि- व्यक्तित्वमानवस्य ध्यानविशिष्य आत्मानं (स्वकीय) प्रति केन्द्रितं भवति। प्रपञ्चस्य बाह्यक्षेत्रे सह तस्य तात्पर्यं न भवति। एते मानवाः प्रभावपूर्णरीत्या अभिव्यक्तकरणे असमर्थाः भवन्ति। तेषु आन्तरिकविश्लेषणस्य मात्रा अधिका भवति।
2. मानसिकरूपेण विकसिताः एते सङ्कोचप्रवृत्तिकारणेन स्वीयान् विचारान् स्पष्टरूपेण, अभिव्यक्तीकरणे काठिन्यमनुभवन्ति एते प्रायः। एतेषु छात्रेषु अन्तःक्रियात्मकप्रक्रिया गतिशीलावस्थायां विद्यमाना भवति। एते कल्पनालोके उड्डयन्ते अन्तर्मुखिव्यक्तित्वे कार्यक्षमता अधिका भवति। एते मानवाः आदर्शवादिनः, दार्शनिकाः, विचारकाश्च भवन्ति।
3. बहिर्मुखि-व्यक्तित्वम्- बहिर्मुखि-व्यक्तित्वे बालकाः प्रायः बाह्यप्रपञ्चे आसक्ताः भवन्ति एते जनाः सामाजिकाः भवन्ति तथा च सामाजिककार्येषु विशेषध्यानं ददति परस्परं मेलनं कर्तुमिच्छन्ति नवीनपरिस्थित्या समायोजने

समर्थाः भवन्ति। आत्मविश्वस्तता अधिका भवति एते विज्ञापनप्रकाशन-भाषणकौशलानि आत्मानं प्रति आकर्षयन्ति। एते जनाः सामाजिकाः राजनैतिकाः व्यावसायात्मिकाः भवन्ति।

4. **भारतीयदृष्ट्या व्यक्तित्वम्-** भारतीयदर्शने व्यक्तित्वं त्रिविधं भवति तच्च सत्त्व- रजस्-तमसश्चेति सत्त्वगुणयुक्तं व्यक्तित्त्वं सर्वोत्तमं भवति अस्मिन् व्यक्तित्वे सद्गुणाः, उच्चादर्शाः नैतिकमूल्यानि च गुणाः भवन्ति। तमोजनाः कामभावयुक्ताः क्रोधयुक्ताः अमानवीयगुणयुक्ताश्च भवन्ति रजोगुणयुक्ताः मध्यश्रेणीयुताः भवन्ति।
प्रस्तुतशोधाध्ययनस्य उद्देश्यं भारतीयशास्त्रपरम्परायां निहितपरम्परागतशास्त्रेषु दर्शनशास्त्रेषु विद्यमानव्यक्तित्त्व-परकमूल्यानां निरूपणं वर्तते दर्शनेषु सत्त्व-रज-तमश्चेति त्रिधा निरूपणं कृतं वर्तते, व्यक्तित्त्वस्य सत्त्वगुणयुक्ते व्यक्तित्त्वे सद्गुणाः, उच्चादर्शाः, नैतिकगुणाः च भवन्ति ''सत्त्वं लघु प्रकाशकमिष्टम्'' सांख्ये सत्त्वं लघुप्रकाशकं च उक्तं, मानवस्य शरीरे यदा सत्त्वं प्रबलं भवति तदा व्यक्तेः अङ्गानि लघूनि भवन्ति, बुद्धिः इन्द्रियाणि च झटिति अर्थज्ञानं कुर्वन्ति सत्त्वगुणधर्मात् लाघवादेव अग्नेः ऊर्ध्वज्वलनं वायोः तिर्यग्गमनं च भवति ''उपष्टम्बकं चञ्चलं रजः'' रजोगुणयुत्ताः जनाः चञ्चल प्रवृत्तिवन्तः, सक्रियाः, प्रेरकाश्च भवन्ति। युंगमहोदयेन प्रतिपादितव्यक्तित्वप्रकारयोः बहिर्मुखीव्यक्तित्ववन्तः भवन्ति सामाजिककार्येषु रुचिमन्तः, सहिष्णवः, समाजसेवातत्पराः समायोजनकुशलाश्च भवन्ति।''गुरुवरणकमेव तमः'' तमो गुणयुताः जनाः प्रायेण अलसाः प्रमदिनः काल्पनिकगुरुतायुताः भवन्ति, कार्येषु अवरोधनं समुत्पादयन्तः जीवनं प्रवर्तनतत्पराः भवन्ति[5]।

केचमर्महोदयस्य मतेन शरीररचनाप्रकारान्तर्भूतं मिश्रितव्यक्तित्वमपि कदाचित् संदृश्यते प्रदीपवच्चार्थतो वृत्तिः यथा अग्निः, वर्तिकातैलयोः विरोधिभूते सत्यपि वर्तिकातैलञ्च द्वावपि सहयोगेन वस्तूनां प्रकाशने साहाय्यकाः भवन्ति। तथैव त्रिगुणसम्मिश्रितं व्यक्तित्त्वमपि बाहुल्येन विद्यते।

सक्रियाः जनाः तपः आचरन्तः स्वाध्यायबलेन आत्मनः विकासं कुर्वाणः भवन्ति तेषां क्रियायोगः तेषां व्यक्तित्वं विशेषतया परिचाययति ''अस्मिन् सन्दर्भे तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः'' व्यक्तित्त्वपरकगुणेषु तटस्थनेतृत्ववन्तः विपद्परिस्थितिषु चित्तैकाग्रतया निर्णयं कर्तुं प्रभवन्ति ''देशबन्धश्चित्तस्य धारणा'' इत्यनेन एतस्य प्रामाण्यं सिद्धयति। स्प्रेन्गरमहोदयस्य मनोवैज्ञानिकविश्लेषणेन समाजशास्त्रीयगुणेषु अन्तर्भूतमेते क्रियायोगगुणाः गुरुसेवा, सत्यभाषणं, मौनग्रहणं, निजाश्रमधर्मपालनं, द्वन्द्वानां सहनं, मिताहारप्रभृतगुणाः विशद्रूपेण व्यक्तित्त्वं प्रतिपादयन्ति। मानवस्य नानागुणाचरणेन अभ्युदयः जायते येन धर्मः सिद्धयति। वैशेषिकदर्शने अस्मिन् विषये विशिष्य वर्णितं वर्तते यथा ''यतोऽभ्युदयनिःश्रेयस्सिद्धिः स धर्मः'' इति[6]।

बुंगमहोदयस्य मतेन उभयमुखी व्यक्तित्वरूपेण सत्त्व-रज-तम-श्चेतेषां गुणानां समन्वयः समाश्रियते। सर्वदर्शनसंग्रहे पातञ्जलयोगदर्शने इत्थं प्रोक्तम्।

सत्त्वं तप्यं बुद्धिभावेन वृत्तं भावा ये वा राजसास्तापकास्ते। तप्याभेदग्रहिणी तामसी या वृत्तिस्तस्यां तप्य इत्युक्त आत्मा।।

अतः सारांशवचोभिः मानवसंवेदनानां प्रभावकाः त्रयः गुणाः मानवस्य व्यवहारं चिन्तनं मनोभावान् च प्रभावयन्ति।
- वेदान्तदर्शनस्य प्रबलसमर्थकः स्वामिविवेकानन्दमहोदयः ईश्वरप्राप्तये, भगवत्साक्षात्काराय विश्वस्मिन् विश्वे आध्यात्मिकीं सत्त्वां सञ्चारयितुं सातत्येन प्रवासमकरोत्। ''मनुष्यस्य अन्तर्निहितपूर्णतायाः अभिव्यक्तिरेव शिक्षा'' इत्यर्थ व्यक्तित्वविकासपरकमूल्यान् कठिनतयः परिश्रमम्, अनुभवप्राप्तिञ्च इत्येतान् आचरितुं प्रत्यवोच्ययत्। दर्शनशास्त्रस्य नास्तिकपरम्परायां चार्वाकमतेन वातावरणेन सह मनुजस्य स्वाभाविकम् अपूर्वसमायोजनमपि प्रकृतिस्वभावेन जायते एव **अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः। केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः।**[7]

व्यक्तित्त्वसन्दर्भे महान् वैज्ञानिकः आलपोर्टमहोदयः प्रावदत् यत् स्वाभाविकवातावरणसमायोजनं तत्तत्परिस्थितिषु मानवेन क्रियते एतद् सर्वमपि प्रकृतेः स्वाभाविकवैचित्र्यात् निष्पद्यते। मुण्डे मुण्डेमतिर्भिन्ना उत्ताहो नवा वाणी मुखे-मुखे।''[8]

प्रसङ्गभेदेन क्वचिद् प्रवृत्तासु ऊहापोहपरिस्थितिषु स्वमानसस्वास्थ्यं समञ्जनाय बहुतायततया जनेन समायोजनं क्रियते तत्तु इत्थमेव सम्भाव्यते क्वचिद्।

ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयन्ति ''माध्यमिक- योगाचार-सौत्रान्तिक- वैभाषिकसंज्ञाभिः प्रसिद्धाः'' बौद्धाः यथाक्रमं स्वमतवैविध्येनपुरुषार्थं प्रतिपादयन्ति।

श्रीमद्भगवद्गीता यश्च ग्रन्थः 'एकं शास्त्रं देवकीपुत्रगीतम्' अपि च 'गीतागङ्गोदकं पीत्वा पुनर्जन्म न विद्यते'* एतादृशेन ज्ञानेन संपूरितः इहपरलोकतारकश्च वर्तते। ग्रन्थेऽस्मिन् व्यक्तित्वपरकं समग्रमपि सारगर्भितं ज्ञानं यथाकालं मानवं सम्प्रेरयति शिक्षयति अभिप्रेरयति च। गीताग्रन्थस्य अध्यायशृङ्खलायाः षष्ठे चरणे प्रतिपाद्यते भगवता 'उद्धरेदात्मनात्मानम्'' आत्मना एव आत्मनः उद्धारः कर्त्तव्यः अर्थात् स्वस्य विकासाय स्वयं यतनीयम्, वाक्यस्यास्य बहुषु प्रसङ्गेषु अन्वयः भवति परं यदि वयम् आत्मोत्थानाय आत्मविकासाय अर्थग्रहणं कुर्मः तर्हि श्रेष्ठव्यवहारस्य आनन्दः, धैर्यं, विश्वासः, विकासाय कृतेन सङ्कल्पेन उत्साहवृद्धिः सन्तोषादयः भवन्ति । येन च आत्मोन्नतिः निश्चप्रचा वर्तते।[9]

पुनश्च आलपोर्टमहोदयस्य, मार्टन-प्रिन्समहोदयस्य, शिक्षाशास्त्रविदा क्रेचमरमहोदयस्य,स्प्रेन्गरमहोदयस्य, मनोवैज्ञानिकशास्त्रिणः युंगमहोदयस्य, फ्रायडमहोदयस्य, देशीयशिक्षामनोवैज्ञानिक-विचारकाणाञ्च मतेन धीरत्ता, आत्मविश्वासः स्थिरता लक्ष्यबद्धता, स्थितप्रज्ञता नियमपालनं निः स्वार्थता च प्रभृतगुणानां सम्बद्धव्यक्तित्वगुणप्रतिपादनं भगवान् श्रीकृष्णः गीतायां स्थिरो भूत्वा अर्जुनः बुद्धिरन्तःकरणं तदा तस्मिन् काले योगमवाप्स्यसि विवेकप्रज्ञा समाधिं प्राप्स्यसि इति संसूचयति तदा एतान् गुणान् प्राप्तकरणजिज्ञासया प्रश्नबीजं प्रतिलभ्यार्जुनः लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया उवाच यत् स्थिरीभूतः सः पुरुषः **स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव। स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्।**[10] 'पृष्टायां स्थितप्रज्ञा-विषयिकी जिज्ञासायां सत्यां भगवान् श्रीकृष्णः-( **प्रजहाति यदा कामान् सर्वान् पार्थमनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।**[11]

अस्मिन् एव प्रक्रमे अस्माकं भारतीयदार्शनिकानां मतेन व्यक्तित्वं त्रिगुणवैविध्यप्रकारकं समन्वितरूपञ्च द्विविधं समुपलभ्यते इत्थमेव श्रीमद्भगवद्गीतायां चतुर्दशेऽध्याये प्रतिपादितं वर्तते।

**सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्।**[12]

एवं त्रिविधगुणवृत्तिस्थाः मनुजाः कीदृशव्यक्तित्वयुताः भवन्ति अस्मिन् विषये समुपलभ्यते इदम् **सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत। ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत।।**[13]

एवं प्रत्येकमपि गुणः नैजगुरुत्तायां तत्त्प्रकारीयान् गुणयुतान् मानवान् व्यवहारोपक्रमे अभिव्यनक्ति अस्मिन् संसारसागरे एतानि पारम्परिकशास्त्रेषु व्यक्तित्वसम्बद्धानि मौलिकानि उद्धरणानि मुक्तातिशयेन विस्तरेण च ज्ञानबलेन व्यक्तित्वं व्याख्यायन्ति इति।

## पादटिप्पणी

1. वामनाप्टे शब्दकोषः पृ.सं.183
2. न्यायदर्शनम्, 1.1.13
3. शिक्षामनोविज्ञानम्
4. उच्चशिक्षामनोविज्ञानम्
5. त्रिपाठी डा.रमाशंकर
6. वैशेषिकसूत्रोपस्करः हि. व्या. दुष्टिराज शास्त्री पृ.11।
7. सर्वदर्शनसंग्रह पृ.सं. 558
8. चार्वाकदर्शनम् (सर्वदर्शनसंग्रह) 11 पृ.सं. 19
9. श्रीमद्भगवद्गीता।
10. श्रीमद्भगवद्गीता-2.54
11. श्रीमद्भगवद्गीता-2.55
12. श्रीमद्भगवद्गीता-14.5
13. श्रीमद्भगवद्गीता-14.11

## ग्रन्थसूची

1. श्रीमद्भगवद्गीता, गीताप्रेस गोरखपुर प्रकाशन, 97 संस्करण, संवत् 2064
2. मिश्र डा.जगदीशचन्द्र, भारतीय दर्शन, चौखम्बा प्रकाशन, दिल्ली 110007
3. न्यायसूत्राणि-1, संस्कृतसंवर्धनप्रतिष्ठानम्, देहली, प्रथममुद्रणम् -2020
4. द्विवेदी प्रो.पारसनाथ, वैदिक साहित्य का इतिहास, चौखम्बा सुरभारती प्रकाशन संस्करण -2014
5. सिंह डा.अरुण कुमार, मनोविज्ञान, समाजशास्त्र तथा शिक्षा में शोध विधियाँ, मोतीलाल बनारसी दास, दिल्ली प्रथम संस्करण-1992
6. सिंह डा.अरुण कुमार, उच्चतर सामान्य मनोविज्ञान, मोतीलाल बनारसी दास दिल्ली प्रथम संस्करण-1997

*सहायकाचार्यः,*

*शिक्षाशास्त्रविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः, बलाहरः, काङ्गडा, हिमाचलप्रदेशः।*

ISSN 2582-2608

# वार्तिकप्रस्थानविमर्शः

**श्री राहुलराजशेखरभट्टः**

***शोधसारः-***

*''लक्ष्यं तु एकं पन्थानो भिन्नाः'' इति न्यायेन वेदान्ते अपि अनेकप्रस्थानानि समुद्भूतानि।*

*(1) भामतीप्रस्थानम्, (2) विवरणप्रस्थानम्, (3) वार्तिकप्रस्थानम्*

*परं तु तेषां सर्वेषामाधारः शाङ्करभाष्यम् । विषयेषु प्रस्थानभेदेन वैमत्ये सत्यपि तत्तद्विषये भाष्यकाराशयः निर्विचिकित्सः एव द्रष्टव्यः।*

**उद्देश्यम् एवं फलम् (Outcome)**

*सर्वासु पाठप्रणालिषु भामतीविवरणप्रस्थानयोः विचारविशदीकरणं दृश्यते । वार्तिकप्रस्थानस्य पाठप्रनाली अतिदुर्लभा। तथा च वार्तिकप्रस्थाने कारिकाबाहुल्यं च दृश्यते। पुनश्च भगवत्पादशङ्कराभिप्राये वार्तिकप्रस्थानरीत्या स्वारस्यप्रदर्शनार्थम्। श्रीसुरेश्वराचार्यस्य वेदान्ते विशालदृष्टेः प्रतिपादनार्थम्। एतस्मात् कारणात् मम वार्तिकप्रास्थाने रुचिरुत्पन्ना। अस्मिन्नेव विषये शोधकार्यं गवेषणरीत्या कर्तव्यम् इति मम निश्चिता मतिः।*

***अध्ययनस्य व्याप्तिः***

*(1) वार्तिकप्रस्थानस्य वेदान्ते प्राथम्यम्।, (2) भगवत्पादशङ्कराभिप्राये वार्तिकप्रस्थानरीत्या स्वारस्यम्।*

*(3) श्रीसुरेश्वराचार्यस्य वेदान्ते विशालदृष्टिः।, (4) वार्तिकप्रस्थानस्य उपादेयत्वम्।*

उदाहरणम्- ***साक्षी सौषुप्तानुभवसिद्धः वार्तिकानुसारेण***

***निष्क्रियश्चेतनः साक्षी सक्रियोऽचेतनः पराक्।***

***व्यावृत्तश्च प्रमात्रादेः सिद्धः साक्षी सुषुप्तगः[1]।।***

*साक्ष्यनुभवाभवेऽपि नावेदिषं सुषुप्तेऽहमितिजागरिते तत्परामर्शः न सुवचः। बुध्यादेः लीनत्त्वात् देहादेश्च जडत्त्वात् नावेदिषम् इति क्षणं तदा केन कथमिति दुर्निरूपम्। अतो नावेदिषमिति तदसिद्धिः साक्षिणः चिदाभासैकमात्रैणेति साधितम्।*

*तत्रैव-* ***संवित्तन्मोहधीवृत्तिशरीरादिविशेषणम्।***

***भोक्तरीह यदा भाति तत्प्रमाणफलं स्मृतम्।।[2]***

*अत्र प्रमातुः साक्ष्यत्वमेव, तद्व्यतिरेकेण साक्षिणः सिद्धेरिति, तथा आत्मनः कर्तृत्त्वं जडोपाधितः, चिद्रूपेण च भोक्तृत्त्वमिति वार्तिके दर्शनात्।*

विदितमेवैतत् समेषामास्तिकानां यत् परमार्थदर्शनायैव प्रवृत्तानि नैकविधानि दर्शनानि इति। तत्तत्वदर्शनं च सततं जन्ममरणप्रवाहरूपे प्रपञ्चे संसरतः जीवस्य स्वस्वरूपसच्चिदानन्दात्मताव्याप्तिरूपमिति सर्वाः विद्याः उद्घोषयन्ति। अज्ञानान्धकारात् लोकानुद्धिधीर्षया कृतावतारः भगवान् वासुदेवः पार्थमुद्दिश्य **अध्यात्मविद्या विद्यानाम्[3]** इति अध्यात्मविद्या सकलविद्यावरिष्ठा इति प्रावोचत्।

यद्यपि 'नदीनां सागरो गतिः' इति न्यायेन दर्शनानां सर्वेषाम् आत्मतत्त्वबोधनाय प्रयासः तथापि न सर्वेषां दर्शनानां साक्षात्तदर्थप्रतिपादकत्वं किन्तु परम्परया इत्यतः साक्षात् आत्मतत्त्वप्रतिपादनात् वेदान्तदर्शनम् इतरदर्शनापेक्षया मूर्धन्यं स्थानमधिगच्छति। तथा च वेदान्तविचारः ब्रह्मज्ञानफलकः। तदनुरोधेन वेदान्तविचाराय प्रवृत्ताः ज्ञानिनः तत्त्वदर्शिनः शास्त्रज्ञाः पण्डिताः स्वस्वानुभवं पुरस्कृत्य स्वस्वबुद्धिगोचरं वा तत्त्वं ग्रन्थरूपेण विलिख्य अज्ञानिजनोद्धरणाय तथा दर्शनस्यास्य प्रवृद्धये च कारणीभूताः अध्यात्मप्रपञ्चे राराजन्ते।

''लक्ष्यं तु एकं पन्थानो भिन्ना:'' इति न्यायेन वेदान्ते अपि अनेकप्रस्थानानि समुद्भूतानि। तद्यथा–

(1) भामतीप्रस्थानम्, (2) विवरणप्रस्थानम्, (3) वार्तिकप्रस्थानम्

परं तु तेषां सर्वेषामाधार: शाङ्करभाष्यम्। विषयेषु प्रस्थानभेदेन वैमत्ये सत्यपि तत्तद्विषये भाष्यकाराशय: निर्विचिकित्स: एव द्रष्टव्य:।

सर्वासु पाठप्रणालिषु भामतीविवरणप्रस्थानयो: विचारविशदीकरणं दृश्यते। वार्तिकप्रस्थानस्य पाठप्रनाडी अतिदुर्लभा। तथा च वार्तिकप्रस्थाने कारिकाबाहुल्यं च दृश्यते। पुनश्च भगवत्पादशङ्कराभिप्राये वार्तिकप्रस्थानरीत्या स्वारस्यप्रदर्शनार्थम्। श्रीसुरेश्वराचार्यस्य वेदान्ते विशालदृष्टे: प्रतिपादनार्थम्। एतस्मात् कारणात् मम वार्तिकप्रास्थाने रुचिरुत्पन्ना। अस्मिन्नेव विषये शोधकार्यं गवेषणरीत्या कर्तव्यम् इति मम निश्चिता मति:।

प्रकृतं तु श्रीपरमहंसपरिव्राजकाचार्यभगवत्पादानामन्तेवासिन: साक्षादिमे सुरेश्वराचार्या: इति इतिहासप्रथिता:। इदं च एषां संन्यासस्वीकारानन्तरं कृतमिति भाति माधवीयशङ्करविजयत:[4]।

यद्यपि नैष्कर्म्यसिद्धि:, पञ्चीकरणवार्तिकं, दक्षिणामूर्तिस्तोत्रवार्तिकं, याज्ञवल्क्यस्मृतिटीका, बालक्रीडेति सन्ति सुरेश्वरीया: ग्रन्था:। अथापि प्राधान्येन नैष्कर्म्यसिद्धि:, ब्रह्मसिद्धि:–(वाचस्पतिमिश्ररचितम्–ब्रह्मतत्त्वसमीक्षा, चित्सुखाचार्यरचितम्– अभिप्रायप्रकाशिका, आनन्दपूर्णरचितम्–भावशुद्धि:), बृहदारण्यकभाष्यवार्तिकं, तैत्तिरीयभाष्यवार्तिकमिति ग्रन्थचतुष्टयमतिप्रसिद्धम्।

सर्वासु पाठप्रणालिषु भामतीविवरणप्रस्थानयो: विचारविशदीकरणं दृश्यते। वार्तिकप्रस्थानस्य पाठप्रनाडी अतिदुर्लभा। तथा च वार्तिकप्रस्थाने कारिकाबाहुल्यं च दृश्यते।

तथा च वार्तिकलक्षणम्–

**उक्तानुक्तदुरुक्तानां चिन्तनम्** इति राजशेखर:[5]।

तथा च अन्यत्र–

**उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुर्वातिकज्ञा मनीषिण:।।**[6]

उभयथापि सङ्गमयितुं शक्यते। भाष्यकारैरुक्तस्यैवात्र स्फुटीकरणं, भाष्यगम्यस्य वाचानुक्तस्य जिज्ञासूनामर्थे परिपूरणम्; प्रतिवादिभिर्दुरुक्तस्य भाष्ये अनूदितस्य शून्यवादादेर्विशदीकरणम्; द्विरुक्तस्य च सार्थकीकरणमित्यादिचिन्ता वार्तिके दृश्यते एव। वार्तिकविवेचितं बृहदारण्यकभाष्यं च काण्वोपनिषद्गम्यमेव। इदमपि वार्तिकारम्भे स्वयं सुरेश्वराचार्या: प्रकाशयन्ति। यथा–

**यां काण्वोपनिषच्छलेन सकलाम्नायार्थसंशोधिनीम्।**
**सञ्चक्रुर्गुरवोऽनुवृत्तगुरवो वृत्तिं सतां शान्तये**[7]**।।** इति।

अत्र वृत्तिशब्देन भाष्यमेव गृह्यते। उत्तरार्धेन वार्तिककरणोद्देश: स्फुटित:। अर्थाविष्करणं कुतार्किककृतांशका–समुच्छित्तये तस्य न्यायसमाश्रितेन वचसा प्रक्रम्यते लेशत इति। अनेन कुतार्किककृताशङ्कोच्छेदनमेव **स्वकीयवार्तिकोद्देश:** इति गम्यते। इदं च वार्तिकामृतम् इति कथ्यते। तथा च उक्तम्–

**तैत्तिरीयकसारस्य वार्तिकामृतमुत्तमम्**[8]**।** इति।

तत्रैव सुरेश्वराचार्यस्य पङ्क्ति:–

**यया यया भवेत्पुंसां व्युत्पत्ति: प्रत्यगात्मनि।**
**सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता**[9]**।।** इति।

अनया पङ्क्त्या इतरप्रक्रियाणामपि प्रत्यगात्मबोधनपराणां श्रुत्यविरुद्धानां परम्परया साधकत्वमुक्तम्।

तथा च अप्पय्यदीक्षिताः सुरेश्वरमतमनुसस्रुः–

**प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परम्।**
**सन्नह्यद्भिरनादरात्सरणयो नानाविधा दर्शिताः[10]।**

सर्वज्ञानसमुच्चयमोऽपि आत्मज्ञानावतारार्थः इत्यपि वार्तिकप्रस्थानाशयः।

तत्रेदं किञ्चित्–

**साक्षी सौषुप्तानुभवसिद्धः– वार्तिकानुसारेण–**

**निष्क्रियश्चेतनः साक्षी सक्रियोऽचेतनः पराक्।**
**व्यावृत्तश्च प्रमात्रादेः सिद्धः साक्षी सुषुप्तगः[11]।।**

साक्ष्यनुभवाभवेऽपि नावेदिषं सुषुप्तेऽहमितिजागरिते तत्परामर्शः न सुवचः। बुध्यादेः लीनत्त्वात् देहादेश्च जडत्त्वात् नावेदिषम् इति क्षणं तदा केन कथमिति दुर्निरूपम्। अतो नावेदिषमिति तदसिद्धिः साक्षिणः चिदाभासैकमात्रेणेति साधितम्।

**तत्रैव–** **संवित्तन्मोहधीवृत्तिशरीरादिविशेषणम्।**
**भोक्तरीह यदा भाति तत्प्रमाणफलं स्मृतम्[12]।।**

अत्र प्रमातुः साक्षित्वमेव, तद्व्यतिरेकेण साक्षिणः सिद्धेरिति, तथा आत्मनः कर्तृत्त्वं जडोपाधितः, चिद्रूरूपेण च भोक्तृत्त्वमिति **वार्तिके** दर्शनात्।

**वार्तिकप्रस्थाने वेदवाक्यप्रामाण्यम्–**

**प्रामाण्यं वेदवाक्यानां न च मानान्तराश्रयात्।**
**अक्षादेरपि मानत्वं यथोक्तादेव कारणात्[13]।।**

तदर्थः– कर्मबोधनेनैव प्रामाण्यमिति मीमांसकमतं वा तदनुयायिमतं वा न समीचीनम्। इष्टप्राप्त्यनिष्टपरिहारोपाय–बोधनपरत्वेन तस्य प्रामाण्यं विधिनिषेधस्थले। ब्रह्मवाक्येषु तु आत्मतत्त्वावरणप्रतिबन्धनिरासेन आत्मस्वरूपप्राप्तिसा–धनबोधनपरत्वेन प्रामाण्यं निर्वाह्यम् इति वार्तिकप्रस्थानाभ्युच्चयः।

## पादटिप्पणी

1. बृहदारण्यकवार्तिकम् 3-4-102.
2. बृहदारण्यकवार्तिकम् 3-4-107.
3. भगवद्गीता
4. माधवीयशङ्करविजयम्-10-104
5. काव्यमीमांसा।
6. आनन्दगिरिटीका ।
7. सं.वा. 2
8. तैत्तिरीयवार्तिकम्-3-10-48.
9. बृहदारण्यकवार्तिकम् 1-4-402.
10. सिद्धान्तलेशसङ्ग्रहः श्लोकसंख्या - 2
11. बृहदारण्यकवार्तिकम् 3-4-102.
12. बृहदारण्यकवार्तिकम् 3-4-107.
13. बृहदारण्यकवार्तिकम् 2-4- 325,326.

## सन्दर्भग्रन्थसूची

(1) उपनिषद्भाष्यम्, श्रीदक्षिणामूर्तिमठः, एस्. सुब्रह्मण्यशास्त्रिवर्यः।
(2) तैत्तिरीयोपनिषद्भाष्यवार्तिकम्, आनन्दाश्रमः।

*सहायकाचार्यः,*

*अद्वैतवेदान्तविभागः, वेदविज्ञानशोधसंस्थानम्, बेङ्गलूरु, कर्नाटकम्।*

ISSN 2582-2608

# गुणत्रयविचारः

डॉ. नेपालदासः

*शोधसारः-*

*त्रिगुणात्मकमस्तीदं जगत्। गुणत्रयेणैव व्याप्तो भवति जगदिदम्। जगदि वैशम्यं केवलं गुणतारतम्यकारणादेव। गुणत्रयविषये भारतीयदर्शनशास्त्रेषु बहुत्र आलोच्यते। सांख्ये गुणत्रयविषये आलोच्यते। भगवद्गीतायां चतुर्दशोध्यायः गुणत्रयविभागयोगः। प्रत्येकस्मिन् जीवे गुणत्रयं वर्तते। येन तस्य व्यवहारः सम्भवति। अपि तु गुणत्रयवैचित्रकारणादेव स्थानविशेषे व्यवहारभेदः दृश्यते। गुणत्रये एव मनुष्याणां व्यवहारः निहितमस्ति। अस्मिन् पत्रे गुणत्रयं, गुणत्रयस्य स्वरूपं, तेषां कार्यं,बन्धनिमित्तकञ्च कथं, कथं वा नियमनं, तस्य लक्षणं वा किं, गुणत्रयातिक्रमणस्योपायः, गुणातीतस्य आचारः, गुणातीतस्य लक्षणं , गुणफलकथनं, गुणानां लक्षणमित्यादिविषयः प्रतिपाद्यते।*

**कुञ्चीशब्दाः**- भक्तिः, सत्त्वः, रजः, तमः, प्रदीपः इति।

**उपद्घातः**- अस्मिन् अध्याये व्याख्यायते यत् समानः आत्मा द्रव्यद्वारा व्यक्तः सन् किमर्थं भिन्नभिन्नरूपेण प्रकटितो भवति। यद्यपि एकमेव जलं भिन्नभिन्नपात्रेषु स्थापयति चेद् तत्र जलस्य वर्णः जलकारणेन न परिवर्तते अपितु काचस्य वर्णनिर्मितं तस्य वर्णात् भिन्नं दृश्यते तथा च एकः शाश्वतः सिद्धान्तः द्रव्यनिर्माणतत्त्वानि समानानि अपि भिन्नभिन्नव्यक्तित्वेन विभिन्नेषु द्रव्यसाधनेषु भिन्नरूपेण अभिव्यक्तिं करोति। गुणाः न पदार्थस्य गुणान् अपितु मनः यया मनोवृत्त्या कार्यं करोति तत् सूचयन्ति । एते मनोवृत्तयः त्रयः सन्ति यथा- सत्त्वं शुद्धात्मकं, रजः भवति चञ्चलः, तमः आलस्यमिति। एते त्रयः गुणाः व्यक्तेः मनः बुद्धिं च भिन्न-भिन्न-समये भिन्न-भिन्न-प्रमाणेन प्रभावितं कुर्वन्ति। यद्यपि एते त्रयः अपि गुणाः सर्वेषु सर्वदा वर्तन्ते तथापि तेषां अनुपातः व्यक्तिगतरूपेण भिन्नः भवति। एते एव नानाविधयः एकस्य व्यक्तेः अन्यस्मात् चरित्रेण, आचरणेन, व्यवहारादिषु च भेदं कुर्वन्ति ।

**गुणत्रयम्**

**सांख्यानां मतम्**-

गुणानां साम्यावस्था प्रकृतिरिति गुणानां स्वरूपवर्णनकाले गुणान् उपस्थाप्य सांख्यदर्शनं वदति अर्थात् सांख्याः गुणानां साम्यावस्थां प्रकृतिं स्वीकुर्वन्ति। इयं प्रकृतिः त्रिगुणात्मिका वर्तते। सत्त्वगुणः, रजोगुणः, तमोगुणश्चेति त्रयो गुणाः भवन्ति। यद्यपि एतेषां गुणानां स्वभावाः भिन्नाः भवन्ति तथापि सञ्चालयन्ति। एवं प्रकारेण लयकालेऽपि मिलित्वा प्रकृतौ विलीनाः भवन्ति। सांख्यदर्शनं गुणान् एवं विवेचयति-

**1. सत्त्वगुणः**-

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ।।**[1]

अयं सत्त्वगुणः पवित्रतायाः स्वच्छतायाश्च प्रतीकोऽस्ति। अस्य लक्षणं यथा-

**सत्त्वं लघु प्रकाशकमिष्टम्** (साङ्ख्यकारिका 11) इति।

अर्थात् अस्य स्वरूपम् उद्दीप्तं, प्रकाशकं लघु च वर्तते। लघुगुणकारणात् वस्तुषु स्तोकत्वम् आगच्छति, विषयाश्च ऊर्ध्वं गच्छन्ति, वस्तूनि प्रकाशितानि जायन्ते, जलप्रवाहः सागरं प्रति अग्रेसरति, अग्निः ऊर्ध्वं ज्वलति, वायुः अनायासं प्रवहति। सत्त्वगुणैः सुखस्य उत्पत्तिः जायते। सत्यं, शान्तिः, प्रेमः, श्रद्धा, विश्वासः, सरलताप्रभृतयो गुणाः सत्त्वगुणात् आविर्भवन्ति। सरलानुभूतिद्वारा परमानन्दस्य प्राप्तिर्जायते। अयं सत्त्वगुणः श्वेतवर्णयुक्तः भवति।

**2. रजोगुणः-**

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्।।**[2]

उत्तेजनायाः चञ्चलतायाः, मलिनतायाश्च प्रतीकोऽस्ति रजोगुणः। सर्वदा चलं चञ्चलः भवति अयं गुणः। तथापि एषः स्वप्रभावेण अन्यान् अपि गुणान् गतिशीलान् करोति। अस्य लक्षणम् ईश्वरकृष्णः इत्थं वदति। यथा-

**उपष्टम्भकं चलञ्च रजः।** इति।

अर्थात् एषः सक्रियः उपष्टम्भकः अर्थात् संश्लेषजनकः भवति। रजोगुणस्य प्रभावेण सर्वाः प्रवृत्तयः प्रभवन्ति। अयं स्वयमेव क्रियाशीलो भूत्वा अन्येष्वपि गुणेषु क्रियाशीलतां जनयति। तस्मात् इन्द्रियाणि स्वविषयोन्मुखानि भवन्ति। कामः, क्रोधः, अहङ्कारः, दर्पः, मोहः, मानं, दम्भः, द्वेषः इत्यादीन् गुणान् उत्पादयति। अस्य रक्तवर्णः अस्य रजोगुणस्य प्रभावेण मनुष्याणां प्रकृतिः चलचञ्चला, असन्तुलिता उद्वेलिता च भवति।

**3. तमोगुणः-**

**तमस्त्वज्ञानजं विद्धि मोहनं सर्व देहिनाम्।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत।।**[3]

ईश्वरकृष्णः तमोगुणस्य लक्षणं वदति यथा-

**गुरुवरणकमेव तमः।** इति।

अर्थात् अयं गुरुः, वरणकः अर्थात् आच्छादकः अवरोधकश्चास्ति। किञ्च असौ सर्वदा अन्धकारेण अज्ञानेन वा आच्छादितः भवति। अयं तमोगुणः मलिनतायाः प्रतीकोऽस्ति। सुखदुःखयोः अवरोधम् उत्पादयतीति स्वभावोऽस्ति। अज्ञानता, उदासीनता, निद्रा, तन्द्रा, आलस्यं, मूर्च्छा, अकर्मण्यतादयो गुणाः विकसिताः भवन्ति। अयं कृष्णवर्णसंयुक्तः भवति।

गुणानां स्वरूपोपस्थापनप्रसङ्गे कार्याकार्यविषये च ईश्वरकृष्णः सांख्यकारिकायां वदति यत्-

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।**
**अन्योऽन्याभिभवाऽश्रयजननमिथुनवृत्तयश्च गुणाः।।** इति।

एकैकं पदं व्याख्यास्यते-

'प्रीत्यप्रीतिविषादात्मकाः' इति

सत्त्व-रज-तमो इति त्रयो गुणाः पुरुषोपभोगादिसाधनत्वेन अप्रधानत्वात् एतेषां गुणत्वं सिद्धं भवति। एते गुणाः प्रीत्याप्रीतिविषादात्मकाः। अर्थात् सुखदुःखमोहात्मकाः। एतेषु त्रिषु गुणेषु सत्त्वगुणः सुखात्मकः, रजोगुणः दुःखात्मकः, तमोगुणः मोहात्मकश्च भवति। अत्र सत्त्वगुणस्य लक्षणं प्रीत्यात्मकम् अर्थात् सुखात्मकम्, रजोगुणस्य लक्षणम् अप्रीत्यात्मकम् अर्थात् दुखात्मकम्, तमोगुणस्य लक्षणं विषादात्मकम् अर्थात् मोहात्मकं भवति।

'प्रकाशप्रवृत्तिनियमार्थाः' इति-

पुनश्च प्रकाशवृत्तिनियमार्थाः इत्यत्र उक्तं यत् प्रकाशः अर्थात् बुद्धिवृत्तिविशेषः सत्त्वगुणस्य प्रयोजनम् कार्येषु प्रवृत्तिः रजोगुणस्य तथैव नियमः अर्थात् निरोधः तमोगुणस्य प्रयोजनम्। तस्मात् सत्त्वगुणः प्रकाशकः, रजोगुणः प्रवर्तकः तमोगुणः नियामकञ्च भवति।

'अन्योऽन्याभिभवाऽऽश्रयजननमिथुनवृत्तयश्च गुणाः' इति-

अन्योन्याभिभववृत्ति इति एषु गुणेषु अर्थवशात् स्वकार्यजननोन्मुखेन अन्यतमेन अन्यौ द्वौ अभिभूयेते। तथा हि यदा सत्त्वं स्वकार्योन्मुखं भवति तदा रजस्तमसी अभिभूय स्वगुणेन प्रीतिप्रकाशात्मकेन अवतिष्ठते। एवं रजः सत्त्वतमसी अभिभूय अप्रीतिप्रवृत्यात्मना धर्मेण, तथा तमः सत्त्वरजसी अभिभूय विषादस्थित्यात्मना धर्मेण अवतिष्ठते।

'अन्योन्याश्रयवृत्तयः' इत्यत्र आश्रयत्वम् उपकारकत्वं बोध्यं न तु आधाराधेयभावरूपम्।

एते त्रयो गुणाः अन्योऽन्यजननवृत्तयोऽपि भवन्ति। अर्थात् परस्परजननव्यापारवन्तः भवन्ति। जननं चात्र गुणानां सादृश्यरूपः परिणामः। सत्त्वगुणः रजस्तमसी स्वानुकूलतया परिणमयति, रजोगुणः सत्त्वतमसी, तमोगुणः सत्त्वरजसी च परिणमयति।

पुनश्च गुणाः अन्योऽन्यमिथुनवृत्तयः अर्थात् परस्परं सहचराः भवन्ति। सर्वदा एतेषां संयोगः जायते। वियोगः न कदापि दृश्यते। प्रत्येकस्मिन् वस्तुनि एतेषां त्रयाणां गुणानां समावेशः दृश्यते। प्रत्येकस्मिन् वस्तुनि एतेषां त्रयाणां गुणानां समावेशः दृश्यते। अतः वस्तु त्रिगुणात्मकं भवति। स्त्रीपुरुषौ इव एते मैथुनेन सृष्टेः कारणभूताः भवन्ति। यथा प्रजापालने तत्परः कश्चन राजा दुष्टनिग्रहे शिष्टानां सुखम् उत्पादयति तथैव अत्र सत्त्वगुणः रजस्तमसोः वृत्तिहेतुः भवति रजः सत्त्वतमसोः वृत्तिं जनयति। तमोगुणश्च स्वावरणात्मकेन स्वरूपेण सत्त्वरजसोः वृत्तिं जनयति।

**गीतोक्तं गुणस्वरूपम्–**

भगवद्गीतायां भगवान् स्वयं कथयति–

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम्।।**[4]
**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च।।**[5]
**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत।।**[6]

सत्वं रजः तम इति एवं नामानः गुणाः देहिनं देहे बध्नन्ति।

**सत्त्वगुणः–** भगवान् कथयति–

**तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ।।**[7]

गुणत्रये सत्त्वगुणः प्रकाशकं निर्मलत्वात्, सुखकारणमपि सत्त्वगुण एव भवति।

**रजोगुणः–**

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्।।**[8]

रजोगुणः रागात्मकं रञ्जनात् तृष्णासमुद्भावकः। अयं कर्मणा सह बध्नाति।

**तमोगुणः–**

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत।।**[9]

अज्ञानाज्जायते तमः। सर्वान् मोहयति। प्रमादालस्यनिद्रादिनां कारणं तमोगुण एव।

**गुणानां लक्षणम्–**

यदा यो गुणः उद्भूतो भवति तदा तस्य किं लिङ्गमिति उच्यते–

ISSN 2582-2608

**सत्त्वगुणः-** **सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।**

**ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत।।**[10]

यदा प्रकाशः देहेस्मिन् श्रोत्रादिषु सर्वद्वारेषु उपजायते तदा सत्त्वगुणस्याभिवृद्धिः जायते इति बोध्दव्यमस्ति। उत इति प्रयोगेण न केवलं प्रकाश अपि तु प्रसादलाघवादिचिह्नैः सत्त्वगुणस्य ज्ञानं जायते।

**रजोगुणः-** **लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहः।**

**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ।।**[11]

यदा अस्मासु लोभः, कर्मप्रवृत्तिः, कर्माणामारम्भः, अशान्तभावः, स्पृहाः भोगेच्छा इत्यादीनां वर्धनं दृश्यते तदा रोजोगुणवृद्धिः इति ज्ञायते।

**तमोगुणः -** **अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।**

**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन।।**[12]

तमोगुणो वृद्धौ सति अविवेकः, कार्येषु अनिच्छा अप्रवृत्तिः, प्रमादः, कर्तव्ये उदासीनता एवं मोह मूढता इत्यादीनामधिकाधिकाभिव्यक्तिः जायते।

**गुणफलकथनम्-**

भगवद्गीतायां भगवान् कथयति- सुकृतकर्मसकलस्य फलं सात्त्विकं निर्मलं, ज्ञानञ्चोपजायते। रजसः फलं दुःखं, लोभश्च। तमसः फलमज्ञानं, प्रमादमोहौ च। तदेवोच्यते-

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।**

**रजसस्तु फलं दुःखमज्ञानं तामसः फलम्।।**[13]

**गुणातीतस्य लक्षणम्-**

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव।**

**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति।।**[14]

अर्थात् यः सत्त्वरजस्तमसां आविर्भूते सति न द्वेष्टि, निवृत्ते सति न आकाङ्क्षति सः गुणातीत इति।

**गुणातीतस्य आचारः-**

**उदासीनवदासीनो गुणैर्यो न विचाल्यते।**

**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते।।**[15]

यः साक्षिरूपेण तिष्ठति मात्रम्, गुणैः यः न विचलितो भवति। गुणाः वर्तन्ते इत्येव। तत्र तेषु विशिष्टं यत्नं नापेक्षते। उदासीनभावेन तिष्ठति तावदेव। अपि च सुखदुःखे समः, अर्थानर्थे समः, प्रियाप्रिये समः, धीररूपः, मानापमानयोः समः, समः मित्रामित्रेषु तादृशः पुरुषो गुणातीतः।

**गुणत्रयातिक्रमणस्योपायः-**

भगवान् कथयति-

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते।**

**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते।।**[16]

ईश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः भक्तियोगेन सेवते सः स्वयं ब्रह्मस्वरूपेण तिष्ठति, अर्थात् ब्रह्मवेद ब्रह्मैव भवति। तत्र भक्तिः भजनं कायेन मनसा वाचा वा निष्पाद्यो भजनीयस्य तुष्टो हेतुः व्यापारः भजमानपुरुषनिष्ठः।

**गुणानां पारस्परिकसम्बन्धः-**

त्रयो गुणाः परस्परं विरोधिनः भवन्तीति साङ्ख्यदर्शनस्य अभिप्रायः। श्वेतलोहितकृष्णभेदेन ऊर्ध्वगमन-अधोगमनभेदेन, सुख-दुःख-मोहभेदेन नैके भेदाः एतेषु वर्तन्ते। परस्परं विरोधिनः एते सृष्टिसञ्चालनकार्यं कथं सम्पादयन्ति इति जिज्ञासायाम् उच्यते यत्- प्रदीपवच्चार्थतो वृत्तिः इति। अर्थात् एकस्मिन् दीपे तैलं, वर्तिका, दीपश्च एतेषां स्वभावाः भिन्नाः भिन्नाः भवन्ति। तथापि एते मिलित्वा प्रकाशम् उत्पाद्य अन्धकारं दूरीकुर्वन्ति। पारस्परिकं विरोधे जाते सति एतेषां गुणत्रयाणां प्रयोजनम् एकमेव भवति। सोद्देश्यसाधनार्थमेते परस्परं सहायभूताः भवन्ति इति।

इत्येवं क्रमेण गुणत्रयस्य अवस्थावर्णनमपि च तस्य स्वरूपं यथावत् प्रतिपादितम्।

## पादटिप्पणी

1. भगवद्गीता-14.6
2. भगवद्गीता-14.7
3. भगवद्गीता-14.8
4. भगवद्गीता -14.5
5. भगवद्गीता-14.2
6. भगवद्गीता-14.9
7. भगवद्गीता-14.6
8. भगवद्गीता-14.7
9. भगवद्गीता-14.8
10. भगवद्गीता-14.11
11. भगवद्गीता-14.12
12. भगवद्गीता-14.13
13. भगवद्गीता-14.16
14. भगवद्गीता-14.22
15. भगवद्गीता-14.23
16. भगवद्गीता-14-26

## ग्रन्थसूची


1. दीनेशशास्त्री. पञ्चदशी. वाराणसी, चौखाम्बा प्रकाशनम् (1970).
2. विवरणाचार्यः. पञ्चपादिका (संस्क. प्रथमः). तिरुपतिः-राष्ट्रियसंस्कृतविद्यापिठम्. (1985).
3. व्यानार्जी दीपकदास. छान्दोग्योपनिषद्. कोलकाताः देशप्रकाशन (1990).
4. शङ्कराचार्यः. ब्रह्मसूत्रशाङ्करभाष्यम् (परिमलो कल्पतरु भामती टिका सहित). (श्रीमदनन्तकृष्णशास्त्रिः, सं.) वाराणसी, कृष्णदास अकादमी. (2000).
5. श्रीमद्भगवद्गीता, गीताप्रेस, गोरखपुर.(2020)
6. स्वामी मुमुक्षानन्द. श्रीमद्भगवद्गीता. कोलकाता उद्बोधन कार्यालय. (2013).



*सहायकाचार्यः,*

*अद्वैतवेदान्तविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः एकलव्यपरिसरः, त्रिपुरा।*

ISSN 2582-2608

# संस्कृतसाहित्यपरम्परायां श्रीदुर्गादत्तशास्त्रिण: अवदानम्

**डॉ. मुकेशशर्मा, डॉ. प्रतिज्ञा आर्या**

***शोधसार:-***

*विश्वपटले हिमाचलप्रदेश:प्रसिद्ध: पर्यटनस्थलत्वेन वर्तते। परन्तु प्राचीनतादृष्ट्या पश्याम: तर्हि ज्ञायते हिमाचलप्रदेश: देवभूमि: इति नाम्ना प्रसिद्ध: आसीत्। देवभूमि:इत्यर्थ: 'देवानां निवासस्थानम्'। सर्वे जानन्ति एव देवानां भाषा संस्कृतम्। अत: एवं वक्तुं शक्यते यत्र देवानां वास: भवति सा अस्ति देवधरा हिमाचलप्रदेश:। देवधराया: त्रिगर्तक्षेत्रस्य वर्तमाने कांगड़ा जनपदस्य नालेटीग्रामे प्रसिद्ध: संस्कृतसेवक: श्रीदुर्गादत्तशास्त्रिमहोदयस्य जन्म अभवत्। एतेषां जन्म 28 अगस्तमासे 1917 तमे वर्षे अभूत्। एतेषां पितु: नाम चेतराममहोदय: श्रीमती गीतादेवी च मातु: नामासीत्। श्रीदुर्गादत्तशास्त्रिमहोदयं हिमाचलस्य कालिदास: अपि वक्तुं शक्यते। अस्मिन् शोधपत्रेतस्य कृतय:, संस्कृतसेवादिकृते तेन प्राप्ता: पुरस्कारा: च वर्णिता: भविष्यन्ति। अयं शोधपत्र: संस्कृतछात्राणां कृते तेषां लिखितसंस्कृतसाहित्यस्य विषये शोधं कर्तुं प्रेरयिष्यति।*

**कूटशब्दा:**- श्रीदुर्गादत्तशास्त्रि:, संस्कृतम्, हिमाचलप्रदेश:, गुलेररियासत:।

हिमाचलप्रदेशस्य संस्कृतसाहित्यकाराणां सन्दर्भे यदि चर्चां कुर्म: चेत् वक्तुं शक्नुम: यत् हिमाचलप्रदेशस्य संस्कृतलेखकानां संस्कृतसाहित्ये अत्यन्तमहत्त्वपूर्णं योगदानमस्ति। तेषु अन्यतमा: दुर्गादत्तशास्त्रिमहोदया: वर्तन्ते। **क्रियासिद्धि: सत्त्वे भवति महतां नोपकरणे** इति उक्ति: शास्त्रिमहोदये चरितार्था भवति। इमे उत्तमा: कृषका: भूत्वापि प्रख्यातविद्वांस: आसन्। किञ्च प्रो. सुनीतिकुमार चैटर्जीमहोदया: डॉ. एस. राधाकृष्णन्, डॉ. जाकिर हुसैन डॉ. वी. वी. गिरि इत्यादिविद्वज्जनै: एतेषां कृतित्वं प्रशंसितम्। एतेषां कृतित्वे शोधार्थिन: शोधकार्यम् अपि कुर्वन्ति।

हिमाचलप्रदेशस्य कांगड़ाजनपदस्य विपाशानदीं निकषां नलेटीनामके शुभग्रामे निर्धनब्राह्मण: श्रीदुर्गादत्तशास्त्रिण: अभूवन्। एतेषां जन्म 28 अगस्तमासे 1917 तमे वर्षे अभूत्। एतेषां पितु: नाम चेतराममहोदय: श्रीमती गीतादेवी च मातु: नामासीत्।

'होनहार बिरवान के होत चीकने पात' एतादृशमेव दुर्गादत्तशास्त्रिमहोदयानां जीवनमासीत्। शास्त्रिणां मनसि संस्कृतसाहित्यं प्रति अगाधश्रद्धा आसीत्। अत एव भवद्भि:सम्पूर्ण स्वीजीवनमेव संस्कृताय प्रदत्तम्। प्रत्युत्पन्नमतिजना: संस्कृतानुरागिणश्च स्वीयमभावमपि प्रभावेन स्वीकुर्वन्ति नात्र सन्देह:। लक्ष्म्या: अभावे सरस्वत्या: महती कृपा संजाता। भवद्भि: अल्पीयसि वयस्येव पंजाबविश्वविद्यालयस्य परम्परागतसंस्कृतस्य प्रथमा परीक्षाम् उत्तीर्य प्रमाणं सुस्थापितं यत् महोदयानां जीवने कस्याप्यभावनस्य प्रभाव: न दरीदृश्यते।

शास्त्रिमहोदयानां विशिष्टम् अध्ययनम् व्याकरणशास्त्रे, अङ्कारशास्त्रे, ज्योतिषशास्त्रे च निर्बाधगतिरासीत्। सौम्यमूर्तिदुर्गादत्तशास्त्रिमहोदयानां जीवनं पूर्णरूपेण संस्कृत-संस्कृतिधर्मतत्त्वसमन्वितमासीत। जीवने मधुरावाणी-निश्छलव्यवहार: प्राणिषु सहृदयता, संस्कृतप्रचाराय दृढ़ेच्छाशक्ति: शास्त्रेषु प्रत्युत्पन्नमति: अन्धानुकरणे पूर्णव्यामोह:। सत्वज्ञानाञ्चितज्ञानं, सशक्ता सबला च लेखनी एतत्सर्वमपि शास्त्रीणां जीवने सौन्दर्यम् आभूषणञ्च आसीत्। महदोयानां जीवनं शास्त्रसिद्धान्तसमन्वितम् आसीत्।

**यस्तु क्रियावान् पुरुष: स विद्वान्।**
**आत्मन: प्रतिकूलानि परेषां न समाचरेत्।**

वसुधैव कुटुम्बकमित्यादि।

**शास्त्रिवर्यै: रचितग्रन्था: प्राप्तपुरस्काराश्च-**

श्रीदुर्गादत्तशास्त्रिणां संस्कृतकाव्यानि, कथा:, नाटकानि, उपन्यासा:, अनुवादग्रन्था:, व्याकरणग्रन्था: इत्यादय: ग्रन्था: रचिता:। एतेषां ग्रन्थानां विवरणमित्थमस्ति-

| काव्यानि | विवरणम् |
|---|---|
| 1. राष्ट्रपथप्रदर्शनम् | पुरस्कृतम् |
| 2. तर्जनी | हिमाचल कला संस्कृति अकादमी द्वारा पुरस्कृतम् |
| 3. मधुवर्षणम् | हिमाचलप्रदेश विश्वविद्यालयस्य पाठ्यक्रमे निर्धारितम् |
| 4. वत्सला | |
| 5. तृणजातकम् (उपन्यासः) | पंजाब विश्वविद्यालयस्य पाठ्यक्रमे निर्धारितम् |

| गद्यानि | विधा | विवरणम् |
|---|---|---|
| 1. वियोगवल्लरी | उपन्यासः | उत्तरप्रदेशशासनद्वारा बाणभट्टपुरस्कारेण पुरस्कृतः |
| 2.बृहत्सप्तपदी | कथासङ्ग्रहः | ------------------- |
| 3.संस्कृतकाव्यकुञ्जम् | कवितासङ्ग्रहः | ------------------- |
| 4. संस्कृतकल्पतरुः (भाग-1) | षष्ठश्रेण्याः कृते | ------------------- |
| 5. संस्कृतकल्पतरुः (भाग-2) | सप्तश्रेण्याः कृते | ------------------- |
| 6. संस्कृतकल्पतरुः (भाग-3) | अष्टमश्रेण्याः कृते | ------------------- |
| 7. स्वप्नवासवदत्तम् | नाटकम् | पहाड़ीभाषायाम् अनूदितम् |
| 8. विक्रमोर्वशीयम् | नाटकम् | पहाड़ीभाषायाम् अनूदितम् |

| लघुरचनाः | विधा |
|---|---|
| 1.छायाविलासः | पद्यम् |
| 2.अनारकली | पद्यम् |
| 3.रेलमन्त्री | पद्यम् |
| 4.रक्षासंस्कृतव्याकरणं भाग-1 | ----- |

**संस्कृतोपलब्धीनां प्राप्तपुरस्कारविवरणम्-**

1. राष्ट्रियपुरस्कारः- 1968
2. महाकविबाणभट्टपुरस्कारः - 1990

3. महामहिमराष्ट्रपतिसम्मानप्रमाणपत्रम्-1990
4. विद्यालंकार: एवं साहित्यरत्नम्-1952
5. हिमाचल कला, संस्कृति: एवं भाषा अकादमीद्वारा संस्कृतकाव्ये प्रथमपुरस्कार:- 1986
6. संस्कृतोपन्यास: वियोगवल्लरी इत्यस्य कृते महाकविबाणभट्टपुरस्कार:-1987
7. राष्ट्रिय-पुस्तकमण्डलस्य सदस्यता- 1968-69
8. हिमाचल कला संस्कृति एवं भाषा-अकादम्या: सदस्यता, हिमाचल प्रदेश विश्वविद्यालयस्य कोर्ट इति सदस्यता
9. भाषा-संस्कृति-विभाग-हिमाचलप्रदेशसर्वकारद्वारा संस्कृतसम्मानेन पुरस्कृत:

**श्रीदुर्गादत्तशास्त्रिवर्याणां सम्मानविवरणम्-**

1. राष्ट्रपतय: श्री वी.वी.गिरीमहोदयै: सम्मानिता:
2. राष्ट्रपतय: डॉ.जाकिर हुसैनमहोदयै: पुरस्कारप्राप्ता:
3. राष्ट्रपतय: श्रीआर वेंकटरमनमहोदयै: सम्मानिता:
4. हिमाचलप्रदेशस्य मुख्यमन्त्रिण: डॉ.यशवन्तसिंहपरमारमहोदयै: सम्मानिता:
5. उत्तरप्रदेशस्य राज्यपालमहोदया: श्रीमुहम्मद उस्मान आरिफमहोदयै: सम्मानिता:
6. मन्त्रिण: श्रीमुरलीमनोहरजोशीमहोदयै: सम्मानिता:
7. उत्तरप्रदेशस्य राज्यपालमहोदया: श्रीमोतीलालबोहरामहोदयै: सम्मानिता:
8. भारतसर्वकारस्य ऊर्जामन्त्रिण: श्रीकृष्णकुमारमहोदयै: सम्मानिता:

15 अक्टुबर 1937 ई.तमे वर्षे गुलेररियासतस्य तत्कालीनराज्ञे श्रीबलदेवसिंहाय शास्त्रिणा संस्कृतकविता अर्पिता। तत्र प्रथमं पद्यम् आसीत्-

**बलदेवस्य सेवायां श्लोकानेतान् समर्पये।**
**सत्यं सत्यं मयावोचि नैवात्युक्तिस्तु रोचते।।**

शास्त्रिवर्यै: रचितग्रन्थेषु केषाञ्चित् ग्रन्थानां सारांश: अस्मिन् शोधपत्रे प्रस्तूयते-

**1.राष्ट्रपथप्रदर्शनम्-** अस्मिन् काव्ये 18 सर्गा:, 958 पद्यानि, 248 पृष्ठसंख्या, प्रकाशनवर्षम् 1967 ई.तमे वर्षम् इति। स्वतन्त्रता प्राप्ते: पूर्वं राष्ट्रभक्ते: उद्वेग: य: आसीत् स: स्वतन्त्रताप्राप्ते: अष्टवर्षाणि परं न्यून: जात:। उद्वेगस्थाने स्वार्थता उच्छृङ्खलता समागता। अस्यां रचनायां गीताया: प्रतिच्छाया दृश्यते तद्यथा-

**देवार्चने करौ ण्यस्तौ मनस्तु गृहकर्मणि।**
**चञ्चलं हि मनो लोकैर्गृहीतुं नैव पार्यते।।**
**मनो यदि वशे जातं जिता सर्वा वसुन्धरा।**
**मनो यदि वशे नास्ति निष्फला: सकला: क्रिया:।।**

**2. तर्जनी**– अस्मिन् काव्ये 11 सर्गाः, 1111 पद्यानि, 332 पृष्ठाः, प्रकाशनवर्षम्– 1970। रचनाकारस्य हृदयं चीन–पाकिस्तानदेशाभ्यां 1962 तः 1965 इति काले युद्धप्रभावेन् प्रभावितम्। इदं काव्यं वीरसैनिकानां प्रोत्साहनं वर्धते। तन्नाम युद्धसमये सैनिकानां समाजे का अपेक्षा भवति। अनेन काव्येन राष्ट्रस्य तर्जनं कुर्वन् सैनिकानां सन्नद्धतायाः कृते सर्वे सचेताः कृताः।

**3. मधुवर्षणम्**– अस्मिन् काव्ये 7 सर्गाः, 465 पद्यानि, मन्दाक्रान्ता इति छन्दः अस्ति। अस्य ग्रन्थस्य द्वितीयसर्गः हिमाचलप्रदेशद्वारा, कुरुक्षेत्रविश्वविद्यालयस्य महाविद्यालयानां पाठ्यक्रमे निर्धारितः वर्तते। इदं काव्यं रणभूमौ सैनिकानां पत्नीनां व्यथां बोधयति। डॉ.कर्णसिंहेन इदं काव्यं प्रशंसितमस्ति। एवञ्च श्रीशास्त्रिणा राष्ट्रकविमैथिलीशरणगुप्तेन तुल्यमिदं काव्यमिति उक्तम्। पत्नी स्वपतिं सैनिकं स्वरक्तेन पत्रं लिखति यत् हे पते! गृहस्य चिन्तां परित्यज्य शत्रुं जयतु। एवञ्च मम चिन्तां परित्यज्य राष्ट्रहिताय युद्धं कुर्वन्तु। कदाचित् यदि देहावसानं भवति तदा अहम् अग्रिमजन्मनि भवता सह भविष्यामि। तद्यथा पद्यमेकम्–

**रक्तेन वक्षसः पत्रं पत्ये लिखति भामिनी।**
**गताय प्रथमे सर्गे जेतुं शत्रून् हिमालये।।**

**4.वत्सला**– अस्मिन् नाटके 6 अङ्काः, 166 पृष्ठाः, प्रकाशनवर्षं 1975 अस्मिन् नाटके राष्ट्रियता दृश्यते। हिमाचलस्य राज्ञः वत्सलाः, कुत्सला च द्वे कन्ये वर्तेते। एतयोः कुलस्येह वर्णनमस्ति। एवञ्च लोकगायकाः (गुग्गा) इत्यस्य वीरगाथां गायन्ति इति वर्णनमस्ति।

**5.तृणजातकम्**– इदम् एकांकी नाटकमस्ति। कुक्कुराः मधुरसभुजः भवन्ति जनास्तु इतस्ततः निवसन्तः सम्यक्तया भोजनमपि न कुर्वन्ति। अतः हे विधे! भवान् नीतिज्ञः सन् कथमित्थं विषमसृष्टिं जनयति इत्यादयः भावाः अस्मिन् नाटके वर्तन्ते।

**6.अनूदितसाहित्यम्**– श्रीदुर्गादत्तशास्त्रिमहोदयं संस्कृतनाटककारमहाकविभासस्य संस्कृतग्रन्थः स्वप्नवासदत्तम् महाकविकालिदासस्य संस्कृतग्रन्थः विक्रमोर्वशीयम् अनयोः ग्रन्थयोः पहाड़ीभाषायाम्, पद्यस्य पहाड़ीपद्येषु गद्यस्य पहाड़ीगद्येषु अनुवादं कृत्वा प्रकाशितम्। अनुवादस्य वैशिष्ट्यं वर्तते पहाड़ीभाषायां संस्कृतछन्दानां प्रयोगः। तद्यथा पद्यमेकम्–

**अग्रे यान्ति रथस्य रेणुपदवीं चूर्णी भवन्तो घना**
**श्चक्रभ्रान्तिररान्तरेषु वितनोत्यन्यामिवारावलीम्।**
**चित्रारम्भविनिश्चलं हरिशिरस्यायामवच्चामरम्यन्मध्ये**
**समवस्थितो ध्वजपटः प्रान्ते च वेगानिलात्।।**

(शार्दूलविक्रीड़ितम्, विक्रमोर्वशीयम्, प्रथमाङ्कस्य श्लोकः 15)

अर्थात् रथस्य अग्रे पुरतः चूर्णत्वं प्राप्नुवानाः पिष्यमाणाः घनाः मेघाः रेणुपदवीं रेणुमार्गम् अनुसरन्ति। यथा पांसवः रथचूर्णिताः रथजवात् पश्चादेव भवन्ति तथैव चूर्णत्वमाप्ता मेघा अपि रथस्य पश्चादेव रेणुमनुगच्छन्तीति।

अश्वानां शिरसि शोभार्थं बद्धं, आयामः दैर्घ्यमस्यास्तीति आयामवद् दीर्घ चामरं चित्रे आलेख्ये आरम्भो न्यासस्तद्वत् नितान्तं निश्चलं स्थगितं दृश्यते रथस्य जवातिशयात् दीर्घमपि चामरं चित्रितमिवासीत्। प्रान्ते एकस्मिन् पार्श्वे विद्यमानो ध्वजपटः रथवेगजन्यः यः अनिलः वायुवेगः तस्मात् वेगानिलात् यन्मध्ये रथमध्यभागे समवस्थितः।

पहाड़ीभाषायाम् अनुवादः पृष्ठ 4 श्लोक 8–

**आग्गे बद्दल धूड़ धूड़ बणदे हेठें भिंयोदे रथे**
**पैया है घुमदा बड़ा चरखड़ी मालूम दो दो जिमें।**
**घोड़े दें बूंब्बलूं न झुलदां बेगे कनें है खड़ा**
**गम्भे दा कपड़ा धुजा च लगयो जांदा किनारें उड़ी।।**

इत्थमाचार्येण अन्येऽपि ग्रन्थाः महता श्रमेण विरचिताः हिमाचालस्य गौरवं वर्धितुम् एतादृशसत्प्रेरणायै लिखिताः।

**निष्कर्षः -**

शास्त्रीयपरम्परामनुसरन्तः साहित्यसृजनेन प्रेरणास्पदग्रन्थानां रचनया पारिवारिक-सामाजिक-मानसिक-सौहार्दभावस्य विश्वभ्रातृत्वस्य राष्ट्रप्रेमादीनां रचनां चक्रुः।

**एका धरा धारयते मनुष्यान् समानभावेन ददाति धान्यम्।**
**ततः कथं स्यान्मनुजेषु भेदः स्नेहस्य सूत्रेण भवन्तु बद्धाः।।**

हिमाचलप्रदेशस्य साहित्यगौरवं, संस्कृतस्य साक्षाद्विग्रहवान् आचार्याः श्रीदुर्गादत्तशास्त्रिणां जीवनं, व्यक्तित्वम्, कृतित्वम् अष्टदशाधिकसंस्कृतभाषया, हिन्दीभाषया मातृभाषया गद्य-पद्य-उपन्यासादयश्च लिखितास्सन्ति। ते सर्वेपि ग्रन्थाः न केवलं हिमाचाललासिनां कृते अपि तु आभारतेपि अत्युपकारकाः ग्रहणीयमनुकरणीयाश्च वर्त्तन्ते। महोदयानां ग्रन्थेषु तादृशबहूनि उदाहरणानि प्राप्तन्ते येषामध्ययनेन अनुसरणेन च समाजे विद्यमान विविधानां समस्यानां समाधाने सहायकास्सन्ति।

## सन्दर्भाः


1. शास्त्री, पृथुराम, हिमाचल प्रदेश के साहित्यकार दुर्गादत्त शास्त्री, हिमाचल कला संस्कृति भाषा अकादमी शिमला- 171001, पृष्ठसंख्या-15.
2. शास्त्री, पृथुराम, हिमाचल प्रदेश के साहित्यकार दुर्गादत्त शास्त्री, हिमाचल कला संस्कृति भाषा अकादमी शिमला- 171001, पृष्ठसंख्या-17.
3. शास्त्री, पृथुराम, हिमाचल प्रदेश के साहित्यकार दुर्गादत्त शास्त्री, हिमाचल कला संस्कृति भाषा अकादमी शिमला- 171001, पृष्ठसंख्या-29.
4. शास्त्री, पृथुराम, हिमाचल प्रदेश के साहित्यकार दुर्गादत्त शास्त्री, हिमाचल कला संस्कृति भाषा अकादमी शिमला- 171001, पृष्ठसंख्या-50.
5. शास्त्री, पृथुराम, हिमाचल प्रदेश के साहित्यकार दुर्गादत्त शास्त्री, हिमाचल कला संस्कृति भाषा अकादमी शिमला- 171001, पृष्ठसंख्या-50-51.
6. शास्त्री, पृथुराम, हिमाचल प्रदेश के साहित्यकार दुर्गादत्त शास्त्री, हिमाचल कला संस्कृति भाषा अकादमी शिमला- 171001, पृष्ठसंख्या-53.


## सन्दर्भग्रन्थाः


1. शास्त्री, पृथुराम, हिमाचल प्रदेश के साहित्यकार दुर्गादत्त शास्त्री,प्रकाशक- हिमाचल कला संस्कृति भाषा अकादमी शिमला- 171001.
2. शास्त्री, दुर्गादत्त, बृहत्सप्तपदी,प्रकाशक-दुर्गादत्त शास्त्री,ग्राम व पत्रालय नलेटी,कांगड़ा,हि.प्र. 177104 मुद्रक- गुलाब प्रिंटिंग प्रैस, कच्चा बाजार, अम्बाला छावनी (हरियाणा)
3. शास्त्री, दुर्गादत्त, मधुवर्षणम्,प्रकाशक- प्रकाशक-दुर्गादत्त शास्त्री,ग्राम व पत्रालय नलेटी,कांगड़ा,हि.प्र. 177104 मुद्रक- गुलाब प्रिंटिंग प्रैस, कच्चा बाजार, अम्बाला छावनी (हरियाणा)
4. पाण्डेय, पण्डित परमेश्वरदीन एवं पाण्डेय, अवनीकुमार, कालिदासकृत- विक्रमोर्वशीयम्, प्रकाशक- चौखम्बा सुरभारती प्रकाशन वाराणसी, वर्ष-2016.
5. अग्निहोत्री, डॉ.प्रभुदयालू,कालिदासकृत- विक्रमोर्वशीयम्, प्रकाशक- रामनारायणलाल वेनीप्रसाद, इलाहबाद-2, उत्तरप्रदेश, वर्ष-1968



*सहायकाचार्यः,*
*शिक्षाशास्त्रविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः, बलाहरः हि. प्र.।*
*सहायकाचार्या,*
*शिक्षाशास्त्रविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः, बलाहरः हि. प्र.।*

ISSN 2582-2608

# दहरविद्यायां परमेश्वरो दहराकाशशब्दवाच्यः- विश्लेषणात्मकमध्ययनम्

**श्री अमितसरकारः**

*शोधसारः-*

*आकाशशब्दो वियति रूढः इति, तदसत्, आकाशाधिकरणे लौकिकरूढिः श्रौतरूढ्या परिहृता। तस्माद्धेतोः ''यावान्वा अयमाकाशः तावान् एषः अन्तर्हृदय आकाशः'' इति। बाह्याकाशोपमानेन, ''उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते'' इति द्युभूम्यादिसमाहितेः, ''एष आत्मा अपहतपाप्मा'' इति। अत्र आत्माऽपहतपाप्मत्वात् इति पदस्यार्थस्तावद्भवति धर्मात्, तथा च दृश्यते- यः आत्मा सः सेतुः विधृतिः इति। तथा च सेतुत्वाच्च धर्मात् दहराकाशः परमेश्वरः एव भवति।*

**कूटशब्दाः**- परमेश्वरः, सेतुः, दहराकाशः, दहरविद्या, जीवः, द्यावापृथिवी, आत्मा॥

**दहरः को वियज्जीवो ब्रह्म वाकाशशब्दतः।**
**वियत्स्यादथवाऽल्पत्वश्रुतेर्जीवो भविष्यति॥**
**बाह्याकाशोपमानेन द्युभूम्यादिसमाहितेः।**
**आत्माऽपहतपाप्मत्वात् सेतुत्वाच्च परमेश्वर॥**[1]

**अन्वयः**- दहरः कः वियत्, जीवः, ब्रह्म वा। आकाशशब्दतो वियत् स्यात्। अथवा अल्पत्वश्रूतेः जीवो भविष्यति। बाह्याकाशोपमानेन, द्युभूम्यादिसमाहितेः आत्माऽपहतपाप्मत्वात् सेतुत्वात् च परमेश्वरः।

**अधिकरणस्यास्य संशयोऽधुना प्रतिपाद्यते-**

छान्दोग्यस्य अष्टमाध्याये श्रूयते **यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन् अन्तराकाशः**[2] इति। तत्र भूताकाशे परस्मिंश्च ब्रह्मणि प्रयुज्यमानस्य आकाशशब्दस्य ब्रह्मपुरशब्दस्य च प्रयोगात् संशयोऽयं भवति यत् दहरः (आकाशः) कः, वियत्, जीवः, ब्रह्म वेति।

संशये आगते सति पूर्वपक्षिणा उच्यते यत् आकाशशब्दतः वियत् स्यात्, यतो हि आकाशशब्दस्य तत्र रूढत्वात्। अथवा दहरशब्देन अल्पत्वश्रुतेः परिच्छिन्नो जीवो भविष्यति न तु ब्रह्म इत्यर्थः।

तदोच्यते सिद्धान्तिना नहि वियतो वियदुपमानं सम्भवति। नापि अल्पपरिमाणो जीवो वियत्परिमाणेन उपमातुं शक्यः। यत्तूक्तम्- आकाशशब्दो वियति रूढः इति, तदसत्, आकाशाधिकरणे लौकिकरूढिः श्रौतरूढ्या परिहृता। तस्माद्धेतोः **यावान् वै अयमाकाशः तावान् एषः अन्तर्हृदये आकाशः**[3] इति। बाह्याकाशोपमानेन, **उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते**[4] इति द्युभूम्यादिसमाहितेः, **एष आत्मा अपहतपाप्मा**[5] इति। अत्र आत्माऽपहतपाप्मत्वात् इति पदस्यार्थस्तावद्भवति धर्मात्, तथा च दृश्यते- **यः आत्मा सः सेतुः विधृतिः**[6] इति। तथा च सेतुत्वाच्च धर्मात् दहराकाशः परमेश्वरः एव भवति।

अधुना अधिकरणेऽस्मिन् विद्यामानानां सूत्राणां समासेन आलोचना विधीयते। तद्यथा-

**1. दहर उत्तरेभ्यः**[7]-

सूत्रेऽस्मिन् द्वे पदे विद्येते- दहरः, उत्तरेभ्यश्च। सूत्रस्यास्यार्थस्तावद्भवति- **अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन् अन्तराकाशः**[8] इत्यादिश्रुतौ दहरपुण्डरीके यो दहराकाशः श्रुतः, सः किं भूताकाशः,

उत जीवः, उताहो परमात्मा इति संशये भूताकाशादि इति पूर्वपक्षः। सिद्धान्तस्तु दहरः-दहराकाशः परमात्मा एव। तत्र च हेतुर्भवति उत्तरेभ्यः इति। उत्तरेभ्यः अर्थात् वाक्यशेषगतेभ्यः आकाशोपमनानत्वद्यावापृथिव्याधिष्ठानत्व-आत्मत्वापहतपाप्मत्वादिहेतुभ्यः इत्यर्थः।

**2. गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च[9]-**

सूत्रेऽस्मिन् पञ्च पदानि विराजन्ते। तद्यथा- गतिशब्दाभ्याम्, तथाहि, दृष्टम्, लिङ्गम्, च इति। सूत्रस्यास्य सामान्योऽर्थोऽत्र मया समासेनोपस्थाप्यते- दहराकाशस्य ब्रह्मपरत्वे हेत्वन्तरमाह- गतिशब्दाभ्याम् अर्थात् इमाः सर्वाः प्रजाः अहरहो गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति[10] इति दहरवाक्यशेषे प्रजाशब्दवाच्यानां जीवानां प्रकृतदहरविषया या गतिः, यश्च ब्रह्मलोकशब्दः ताभ्यां दहरस्य परब्रह्मता अवगम्यते। तथाहि दृष्टम्- **सता सौम्य तदा सम्पन्नो भवति**[11] इति श्रुत्यन्तरे सुषुप्तावस्थायां ब्रह्मणो जीवगम्यत्वं दृष्टम्। लिङ्गम् अर्थात् एवञ्च प्रत्यहं हिरण्यगर्भलोकगमनासम्भवात् ब्रह्मैव लोकः इति कर्मधारयसमास एव ग्राह्य इति अस्मिन् अर्थे अहरहः गमनमेव लिङ्गं भवति। चशब्देन निषादस्थपतिन्यायः अपि कर्मधायरयग्रहणे सूचितः।

**3. धृतेश्च महिम्नोऽहस्यास्मिन्नुपलब्धेः[12]**

इत्यस्मिन् सूत्रे षट् पदानि वर्तन्ते। तद्यथा-धृतेः, च, महिम्नः, अस्य, अस्मिन्, उपलब्धेः इति। सूत्रस्यास्यार्थस्समासेनोपस्थाप्यते- दहरस्य परब्रह्मत्वे हेत्वन्तरमाह- **अथो य आत्मा सः सेतुः विधृतिः एषां लोकानामसम्भेदाय**[13] इति श्रूतायाः धृतेश्च-विधृतेः अपि हेतोः दहराकाशः परमात्मा एव। अस्य महिम्नः अर्थात् सर्वलोकविधारणलक्षणस्य च अस्य महिम्नः अस्मिन् परमात्मनि **एषः सेतुः विधरणः**[14] इत्यादि श्रुत्यन्तरे उपलब्धेः उपलम्भात् विधारणस्य परमात्मलिङ्गत्वमेव सिद्ध्यति।

**4. प्रसिद्धेश्च[15]**

अस्मिन् सूत्रे द्वे पदे विराजेते। तद्यथा प्रसिद्धेः, च इति। सूत्रस्यार्थो भवति दहरस्य परत्वे हेत्वन्तरमाह- **आकाशो वै नामरूपयोः निर्वाहिता**[16] इत्यादिश्रुतौ आकाशशब्दस्य परमात्मनि एव प्रसिद्धेः, च अपि दहराकाशः परमात्मा एव। लोकरूढ्यपेक्षया श्रौतरूढेः बलीयत्वात् दहराकाशो न भूताकाशः इत्यर्थः।

**5. इतरपरामर्शात् स इति चेन्नासम्भवात्[17]**

सूत्रेऽस्मिन् षट् पदानि परिलक्ष्यन्ते। तद्यथा इतरपरामर्शात्, सः, इति, चेत्, न, असम्भवात् चेति। सूत्रस्य सामान्योऽर्थो भवति- **एषः सम्प्रसादोऽस्मात् शरीरात् समुत्थाय**[18] इत्यादि श्रुतौ सम्प्रसादशब्देन इतरपरामर्शात् इतरस्य जीवस्य परामर्शात् उल्लेखात् सः जीवः दहराकाशोऽस्तु, इति चेत् न, असम्भवात् अर्थात् आकाशोपमेयत्वापहतपाप्मत्वादीनां धर्माणां जीवे सम्भवाभावात् इत्यर्थः।

**6. उत्तराच्चेदाविर्भूतस्वरूपस्तु[19]**

सूत्रेऽस्मिन् चत्वारि पदानि वर्तन्ते। तद्यथा उत्तरात्, चेत्, आविर्भूतस्वरूपः, तु इति। सूत्रस्यार्थः प्रतिपाद्यते- उत्तरात् अर्थात् **य एषः अक्षिणि पुरुषो दृश्यते**[20] इत्यादेः परवर्तिनः प्रजापतिवाक्यात् जाग्रदाद्यवस्थापन्ने जीवे अपहतपाप्मत्वादिसम्भवात् जीव एव दहराकाशः इति चेत् , अत्र सिद्धान्ती आह- आविर्भूतस्वरूपः तु इति। तुशब्दः जीवशङ्काव्यावृत्त्यर्थः। उत्तरात् प्रजापतिवाक्यात् अपि न जीवशङ्का युक्ता इत्यर्थः। यतः आविर्भूतस्वरूपः अर्थात् आविर्भूतपारमार्थिकस्वरूपः जीवः, तत्र विवक्षितः, **न तु जीवत्वेन रूपेण, परं ज्योतिः उपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते**[21] इति उपसंहारदर्शनात्। अतः ब्रह्मत्वेन रूपेण जीवस्य अपहतपाप्मत्वादिसम्भवात्, जीवत्वेन तदसम्भवात्, न पूर्वसूत्रस्थहेतुः असिद्धः इति भावः।

एतस्यामवस्थायां जातायां सत्यां ब्रह्मसूत्रे उत्तराधिकरणमारभ्यते। तथा च न्यायमालायामुक्तमस्ति–

**यः प्रजापतिविद्यायां स किं जीवोऽथवेश्वरः।**
**जाग्रत्स्वप्नसुषुप्तोक्तेस्तद्वाञ्जीव इहोचितः[22]॥**
**आत्माऽपहतपाप्मेति प्रक्रम्यान्ते स उत्तमः।**
**पुमानित्युक्त ईशोऽत्र जाग्रदाद्यवबुद्धये[23]॥**

**अन्वयः**– प्रजापतिविद्यायां यः, सः किं जीवः अथवा ईश्वरः। जाग्रत्स्वप्नसुषुप्तोक्तेः तद्वान् जीवः इह उचितः। आत्मा अपहतपाप्मा इति प्रक्रम्य अन्ते सः उत्तमः पुमान् इति उक्तः। अत्र: ईशः। अवबुद्धये जाग्रदादि।

संशयो भवति दहरविद्यायाः उपरि प्रजापतिविद्यायाम् इन्द्रविरोचनप्रजापतिसंवादे श्रूयते– **यः एषः अक्षिणि पुरुषो दृश्यते, एषः आत्मा इति होवाच**[24] इति। तत्र **यः आत्मा अपहतपाप्मा**[25] इत्यादिना अपहतपाप्मत्वादिगुणकं परमात्मानम् अन्वेष्टव्यत्वेन प्रतिज्ञाय **अक्षिणि पुरुषः दृश्यते**[26] इत्यादिना जीवात्मनः निर्देशात् संशयोऽयं भवति यत्– प्रजापतिविद्यायां यः उक्तः सः किं जीवः अथवा ईश्वरः।

पूर्वपक्षी आह– **अक्षिणि पुरुषः दृश्यते, स्वप्ने महीयमानः चरति**[27], **सुप्तः समस्तः सम्प्रसन्नः**[28] इत्यादिना यथाक्रमेण जाग्रत्स्वप्नसुषुप्तोक्तेः तद्वान् जीवः इह ग्रहीतुमुचितः, ईश्वरस्य जाग्रदवस्थाराहित्यात् इति भावः।

एतस्यामवस्थायां सिद्धान्ती आह– **आत्मा अपहतपाप्मा इति प्रकम्य अन्ते सः उत्तमः पुमान्**[29] इत्युक्तः, अतः अत्र ईशो ग्रहीतव्यः। न च एवं सति जागरणाद्युपन्यासवैयर्थ्यम्, यतः शाखाचन्द्रन्यायेन पुंसाम् अवबुद्धये जाग्रदादि उपन्यस्तं भवति। तस्मात् ईश्वरः अक्षिपुरुषः।

तथा च सूत्रमस्ति **अन्यार्थश्च परामर्शः**[30]

सूत्रेऽस्मिन् दृश्यते यत्– एवं प्रजापतिवाक्ये ब्रह्मण एव अपहतपाप्मत्वाद्युक्तेः जीवे तदसम्भवात् न जीवो दहर इत्युक्तम्। तर्हि जीवपरामर्शस्य का गतिः इति आशङ्क्य आह– **अथ यः एषः सम्प्रसादः**[31]। परामर्शः– जीवपरामर्शः, च– तु, अन्यार्थः जीवात् अन्यस्य उपसम्पत्तव्यपरमात्मनः प्रतिपादनार्थः, न जीवप्रतिपादनार्थः। अयं भावः– जीवोपसम्पत्तव्यत्वेन हि परमात्मा उपदिश्यते। स च उपदेशः जीवपरामर्शं विना न सम्भवतीति तदर्थं जीवपरामर्शः, न जीवप्रतिपादनार्थः इति।

अपरञ्च सूत्रमस्ति– **अल्पश्रुतेरिति चेत्तदुक्तम्**[32] इति। इत्यस्य सूत्रस्यार्थस्तावद्भवति **अल्पश्रुतेः दहरोऽस्मिन् अन्तराकाशः**[33] इति आकाशस्य अल्पत्वश्रवणात् न दहराकाशः परमात्मा, किन्तु तस्य आराग्रमात्रजीवरूपत्वं युक्तम् इति चेत् तदुक्तम्– **तत् तत्र अर्भकौकस्त्वात्**[34] इत्यादिसूत्रे इत्यर्थः। उक्तम् अस्य समाधानम्। उत उपासनार्थं परमेश्वरे औपाधिककल्पितस्य अविरुद्धत्वात् दहराकाशः परमात्मा इति उपास्यः इति सिद्धम्।

## पादटिप्पणी

1. न्यायमाला, वेदान्तदर्शनम् (बङ्गपुस्तकम्), पृष्ठसंख्या 609
2. छान्दग्योपनिषत् 8 ।1 ।1
3. तत्रैव 8 ।1 ।3
4. तत्रैव 8 ।1 ।3
5. तत्रैव 8 ।1 ।5
6. तत्रैव 8 ।4 ।1
7. ब्रह्मसूत्रम् 1 ।3 ।14
8. छान्दग्योपनिषत् 8 ।1 ।1
9. ब्रह्मसूत्रम् 1 ।3 ।15
10. छान्दग्योपनिषत् 8 ।3 ।2
11. तत्रैव 6 ।8 ।1

ISSN 2582-2608

12. ब्रह्मसूत्रम् 1 ।3 ।16
13. छान्दग्योपनिषत् 8 ।4 ।1
14. बृहदारण्यकोपनिषत् 4 ।4 ।22
15. ब्रह्मसूत्रम् 1 ।3 ।17
16. छान्दग्योपनिषत् 8 ।14
17. ब्रह्मसूत्रम् 1 ।3 ।18
18. छान्दग्योपनिषत् 8 ।3 ।4
19. ब्रह्मसूत्रम् 1 ।3 ।19
20. छान्दग्योपनिषत् 8 ।7 ।4
21. तत्रैव 8 ।12 ।3
22. इवोचितः इति पादः। वच्-कितच्-उचितः, अर्थः-कथितः, वर्णितः। रुचिवचिकुचिकुटिभ्यः कितच्-सिद्धान्तकौमुदी, उणादिप्रकरणम्, पृष्ठाङ्कः 635
23. न्यायमाला, वेदान्तदर्शनम् (बङ्गपुस्तकम्), पृष्ठसंख्या 634
24. छान्दग्योपनिषत 8 ।7 ।4
25. तत्रैव 8 ।7 ।1
26. तत्रैव 8 ।7 ।4
27. तत्रैव 8 ।10 ।1
28. तत्रैव 8 ।11 ।1
29. तत्रैव 8 ।12 ।6
30. ब्रह्मसूत्रम् 1 ।3 ।20
31. छान्दग्योपनिषत् 8 ।3 ।4
32. ब्रह्मसूत्रम् 1 ।3 ।21
33. छान्दग्योपनिषत् 8 ।1 ।1
34. ब्रह्मसूत्रम् 1 ।2 ।7

## ग्रन्थसूची


1. सांख्य वेदान्ततीर्थ, दुर्गाचरण (अनु. ओ सम्पा.), छान्दग्योपनिषद्, कलिकाता - देवसाहित्य कुटीर, 2005।
2. सुरेश्वराचार्य, बृहदारण्यक भाष्यवार्तिक, पुणा – आनन्दाश्रम।
3. स्वामी गम्भीरानन्द, उपनिषद् ग्रन्थावली (बृहदारण्यकोपनिषत्), कलिकाता – उद्बोधन कार्यालय, 2000।
4. स्वामी गम्भीरानन्द, उपनिषद् ग्रन्थावली, कलकाता – उद्बोधन कार्यालय, 1993।
5. स्वामी द्वारिकादास शास्त्री (सम्पा.), छान्दग्योपनिषद्, वाराणसी – प्राच्य भारती प्रकाशना, 1965।
6. स्वामी लोकेश्वरानन्द, छान्दग्योपनिषद्, कलकाता – श्रीरामकृष्ण मिशन इनस्टिटिउट अफ कालचार, 1998।
7. स्वामी विश्वरूपानन्द, वेदान्तदर्शन, स्वामी चिद्घनानन्द पुरी, कलिकाता – उद्बोधन कार्यालय, 2002।



*सहायकाचार्यः,*

*संस्कृतविभागः, सेवाभारतीमहाविद्यालयः, कपगरी, पश्चिमबंगालः।*

ISSN 2582-2608

# गीतानुसारं पवित्रमयजीवनमार्गान्वेषणस्योपायाः

श्री मानसमण्डलः


***शोधसारः-***

*इन्द्रियाणि यावान् विषयान् प्रति गच्छन्ति ततः उत्तरोत्तरम् इन्द्रियचाञ्चल्यं वर्धते। यदि इन्द्रियाणि अस्थिराणि भवन्ति तर्हि कदापि यथार्थं सिद्धान्तं स्वीकर्तुं न शक्यते। श्रद्धा, एकनिष्ठता, इन्द्रियसंयमश्च एतत् त्रितयम् ज्ञानस्य अन्तरङ्गसाधनम्। एभिः ज्ञानं लभ्यते चेत् साधकं परमं शान्तिम् अवाप्नोति। राग-द्वेष-सुख-दुःखप्रभृतिभ्यः द्वन्द्वेभ्यः मुक्तः न भवति चेत् परमशान्तिं नैव आप्यते। संसारे यां शान्तिं वयं प्राप्नुमः तत् क्षणिकम्। अज्ञानिनः कदाऽपि परमं शान्तिं न प्राप्नुवन्ति, यतो हि तस्य चित्तं सर्वदा संशये, सन्देहे, कामनायां च भ्रमति। केवलं ज्ञानिनः एव परमं सिद्धिमवाप्नुवन्ति।*


**कूटशब्दाः**- श्रीमद्भगवद्गीता, ज्ञानी, शान्तिः, उपायः, परमात्मा, माया।

अयं प्रश्नः अस्माकं सर्वेषां जीवने भवति यद्-जीवने शान्तिलाभस्य उपायाः के? अस्मिन् जगति सर्वे शान्तिमिच्छन्ति। किन्तु मार्गभ्रष्ट-नाविकवत् जीवनपारावारे इतस्ततः भ्रमित्वा अपि उचितमार्गस्य सन्धानं नैव प्राप्नुवन्ति।

अर्जुनः भगवतः कृष्णस्य सकाशे शान्तेः सरलमुपायं पृष्टवान्। तदुत्तरत्वेन भगवान् गीतायां सरलं मार्गमुपदिदेश। भगवान् उवाच सोपानेन आरोहणवेलायां यथा एकं सोपानम् उत्तीर्य सोपानान्तरं आरोहन्ति जनाः तथैव शान्त्यै उचितः पन्थाः अनुसरणीयः। अर्थात् शान्त्यै आदौ ज्ञानं लब्धव्यम्। ज्ञानेन विना शान्तिः न लभ्यते। अस्मिन् जगति ज्ञानतुल्यं पवित्रं द्वितीयं किमपि नास्ति। प्रकृतं ज्ञानं लभ्यते चेत् अस्माकं जीवने अनायासेनैव शान्तिः आगच्छति। अतः भगवान् आदौ ज्ञानलाभाय पन्थानं निर्दिदेश।

ज्ञानविहीनः जनः साक्षात् पशुसमानः। ज्ञानमेव जनानां शरीरान्तः मलिनतां दूरीकरोति। ज्ञानं दीपशिखासमानम्। ज्ञानस्वरूपेण दीपेण अज्ञानरूपिणम् अन्धकारमपगच्छति। तमान्धकारं च दूरीकृत्य शरीरान्तःस्थां प्रकृतसत्तां जागरयति। अतः गीतायां ज्ञानयोगाध्याये ज्ञानविषये उच्यते-

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति[1]॥**

अस्मिन् जगति ज्ञानतुल्यं पवित्रं किमपि द्वितीयं नास्ति। निष्कामेण कर्मणा यः सिद्धिं लभते तस्य चित्ते एव इदं पवित्रं ज्ञानं भासते। अनेन वाक्येन उच्यते यत्- अस्मिन् जगति यज्ञेन, दानेन, तपसा, सेवया, पूजया, व्रतेन, उपवासेन, प्राणायामेन, शमदमाभ्यां, संयमेन, जपेन, ध्यानेन च सप्तगङ्गतीर्थभ्रमणेन च यादृशं पवित्रं भवन्ति जनाः ततोऽपि अत्यधिकं पवित्रं भवति ज्ञानेन। यतो हि पूर्वोक्तानि सर्वाणि ज्ञानस्य साधनानि, ज्ञानं च सर्वेषां फलम्। अतः ज्ञानस्य उत्पत्तये सर्वाणि साधनानि अपि पवित्राणि भवन्ति। तस्मात् ज्ञानात् जनाः परमात्मनः यथार्थं स्वरूपं ज्ञातुं प्रभवन्ति। यथार्थज्ञाने मिथ्यायाः छलस्य चौर्यस्य पापस्य रागस्य द्वेषस्य हर्षस्य शोकस्य अहम्भावप्रभृतीनां च अभावात् यथार्थं ज्ञानं परमपवित्रं भवति। अतः सश्रद्धं यः महापुरुषोक्तानां दर्शनानां वन्दनं चिन्तनं च सततं करोति, तथा च सज्जनैः सह सम्बन्धं स्थापयति स एव अस्मिन् जगति परमं पवित्रं स्थानं लभति, यथार्थं ज्ञानं लभते इत्यर्थः, तद्वत् पवित्रं जगति द्वितीयं वस्तु किमपि न भवति[2]।

अर्थात् ज्ञानं भवति अस्य जगतः पवित्रतमं वस्तु। अतः अस्माकं मनसि स्वतः एव प्रश्नो जायते– केनोपायेन ज्ञानं लब्धुं शक्यते ? भगवान् श्रीकृष्णः गीतायाः ज्ञानयोगाध्याये रम्यया भाषया ज्ञानस्य प्रप्त्युपायं निर्दिदेश। गीतायाः द्वयोः मार्गयोः निर्देशः प्राप्यते। तयोः मार्गयोः एकं भवति अन्तरङ्गसाधनम् अपरं च बहिरङ्गसाधनम्। बहिरङ्गसाधनत्वेन भगवता निर्दिष्टो मार्गो भवति–

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः[3] ॥**

गुरुचरणयोः प्रणामेन, नानाविषयाणां प्रश्नैः, गुरुसेवया च इदं ज्ञानं लभ्यते, ततश्च तत्त्वदर्शी गुरुः शिष्याय यथार्थं ज्ञानमुपदिशति।

पूर्वस्मिन् श्लोके यज्ज्ञानमुपदिष्टं तस्य ज्ञानस्य द्वौ उपायौ उपदिष्टौ– एकेन उपायेन परोक्षं ज्ञानं लभ्यते, अपरेण उपायेन च प्रत्यक्षं ज्ञानं लभ्यते। ब्रह्म किम् ? ब्रह्मणः स्वरूपं किं ? आत्मा कः ? इत्यादीन् विषयान् गुरोः श्रुत्वा परोक्षं ज्ञानं लभते। परन्तु इदं परोक्षं लब्धुं शिष्यस्य केचन गुणाः अपेक्षिताः भवन्ति। प्रथमम् आचार्यः शिष्येण प्रणतव्यः। शिष्यः विनयी नम्रः च भविष्यति। गुरौ तस्य श्रद्धा भक्तिः यथा स्यात्। शिष्यः सर्वदा सविनयं गुरोः पूजां विधास्यति। इतोऽपि ज्ञानार्थिनः मनसि सर्वदा जिज्ञासा भवेयुः। शिष्यश्च सर्वदा अनुसन्धित्सुः भूत्वा आचार्याय स्वजिज्ञासां प्रक्ष्यति। ततश्च आचार्यस्य सेवा अपेक्षते। अनया सेवया एव आचार्यः प्रसन्नो भवति प्रसन्नः सन् आचार्यः शिष्याय तत्त्वं ज्ञानमुपदिशति।

पुरा गुरुसेवा शिक्षायाः मुख्यम् अवयवम् आसीत्। इत्थं प्रसन्नः सन्तत्त्वदर्शी आचार्यः अधिकारिसम्पन्नं शिक्षार्थिनं ब्रह्मज्ञानविषये उपदिशति। अर्थात् ब्रह्मज्ञानं लब्धुं तत्त्वदर्शी गुरुः अनुसर्तव्यः यतः यः स्वयं ब्रह्मज्ञानी नास्ति तेन ब्रह्मज्ञानमुपदेष्टुं न शक्यते[4]।

बहिरङ्गसाधनेन ज्ञानं लब्धुं त्रयः मार्गाः उपदिष्टाः। प्रथमं गुरोः चरणे दण्डवत् प्रणामः, द्वितीयं नाना विषयेषु प्रश्नः प्रष्टव्यः, तृतीयं गुरोः सेवा। केवलम् अनेन ज्ञानलाभः असम्भवः। केवलं बहिरङ्गसाधनेन ज्ञानं लब्धुं न शक्यते अतः भगवान् बहिरङ्गसाधनानि उक्त्वा अन्तरङ्गसाधनानि प्रोवाच। भगवान् श्रीकृष्णः उपदिष्टवान् यत्–

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति[5] ॥**

यः श्रद्धावान् एकनिष्ठः साधकः जितेन्द्रियश्च स एव ज्ञानं लभते। आत्मज्ञानं लब्ध्वा अचिरेणैव परमशान्तिं लभते।

**श्रद्धावान्**– श्रद्धावतः ज्ञानलाभाय गीतायां ये उपायाः प्रोक्ताः ते उपायाः पूर्णरूपेण विज्ञानसम्मताः। श्रद्धायाः संज्ञा वेदान्तसारे उक्तं यत्– गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा[6]। गुरौ वेदान्तवाक्ये च विश्वासः एव श्रद्धा। वेदेषु, शास्त्रेषु, ईश्वरे, महापुरुषाणां वचनेषु, परलोके च जनानां प्रत्यक्षवत् यः विश्वासः परमश्रद्धा उत्तमचिन्ता च भवति सा एव श्रद्धा। इयं श्रद्धा यस्मिन् भवति स एव श्रद्धावान् भवति। अतः श्रद्धावान् जनः ज्ञानिनः महात्मनः सकाशे गत्वा प्रणामसेवाविनयादिभिः तस्मात् उपदेशं प्राप्य ज्ञानयोगेन कर्मयेगेन वा तत्त्वं ज्ञानं लभते। यदा वयं पाठविषये, मूर्तिनिर्माणविषये, पाककर्मविषये यत्किमपि ज्ञातुं यदा गुरोः सकाशे गच्छामः तस्मिन् गुरौ अस्माकं विश्वासः श्रद्धा च भवेताम्।

तदैव अस्माकं शिक्षा सार्थं भवति। यदि गुरौ अस्माकं श्रद्धा न भवति तदा तस्मिन् विषये कदाऽपि वयं गूढं ज्ञानं लब्धुं न शक्नुमः।

शिक्षार्थिभिः श्रद्धया सह ज्ञातुं प्रबलेच्छा अपि सञ्जागरणीया। यतो हि इच्छया विना श्रद्धायां सत्यामपि कदापि विद्या सफला न भवति। छात्राः यदा पठनाय गच्छन्ति तदा गुरुः विषयान् सहजया रीत्या उपस्थापयति, तथा छात्रेभ्यः

सरलान् उपायान् निर्दिशति। विद्यार्थिनः यदा गुरुणा निर्दिष्टं मार्गमनुसरन्तः पाठाभ्यासं कुर्वन्ति तदैव ते सफलाः भवन्ति। अयं विश्वासः यदा दृढो भवति तदा सः इतोऽपि ज्ञातुं यतमानः भवति। ते विद्यार्थिनः प्रातः उत्थाय पाठाभ्यासं कुर्वन्ति। यथासमयं विद्यालयं महाविद्यालयं विश्वविद्यालयं वा गत्वा विद्याभ्यासं कुर्वन्ति। विद्याभ्यासकाले याः समस्याः अनुभवन्ति, ताः समस्याः गुरवे निवेदयन्ति, गुरुश्च तेषां संशयं निवारयन्ति। तेन यथाक्रमं विद्यार्थिनां बुद्धिबलं ज्ञानं वा वर्धते। गुरुरपि छात्राणामाग्रहं विलोक्य तान् पाठयितुमाग्रही भवति। परन्तु यदि शिक्षार्थिनः यतमानाः न भवन्ति तर्हि शिक्षकोऽपि ज्ञानदाने अनुत्साही भवति। तदा विद्यार्थिनां ज्ञानप्राप्तिः न भवति।

जितेन्द्रियः श्रद्धावान् यतमानः भवत्यपि यदि इन्द्रियसंयमी न भवति तर्हि तेन कदाऽपि यथार्थं ज्ञानं न लभ्येत। इन्द्रियं संयतं न भवति चेत् सर्वाणि साधनानि व्यर्थानि भविष्यन्ति। यतो हि इन्द्रियं संयतं न भवति चेत् चित्ते स्थिरता नाऽगच्छेत्। अस्थिरचित्तवतः ज्ञानप्राप्तिः न सम्भवति। चलति जलस्त्रोते कदापि स्वमुखप्रतिबिम्बं द्रष्टुं न शक्यते, तद्द्रष्टुं जलम् अचलमर्थात् स्थिरं भवेत्। इन्द्रियाणि यावान् विषयान् प्रति गच्छन्ति ततः उत्तरोत्तरम् इन्द्रियचाञ्चल्यं वर्धते। यदि इन्द्रियाणि अस्थिराणि भवन्ति तर्हि कदापि यथार्थं सिद्धान्तं स्वीकर्तुं न शक्यते। श्रद्धा, एकनिष्ठता, इन्द्रियसंयमश्च एतत् त्रितयं ज्ञानस्य अन्तरङ्गसाधनम्। एभिः ज्ञानं लभ्यते चेत् साधकं परमं शान्तिम् अवाप्नोति। राग-द्वेष-सुख-दुःखप्रभृतिभ्यः द्वन्द्वेभ्यः मुक्तः न भवति चेत् परमशान्तिं नैव आप्यते। संसारे यां शान्तिं वयं प्राप्नुमः तत् क्षणिकम्। अज्ञानिनः कदाऽपि परमं शान्तिं न प्राप्नुवन्ति, यतो हि तस्य चित्तं सर्वदा संशये, सन्देहे, कामनायां च भ्रमति। केवलं ज्ञानिनः एव परमं सिद्धिमवाप्नुवन्ति।

## अन्त्यटीकाः

1. श्रीमद्भगवद्गीता, 4।38
2. जयदयालगोयेन्दकाः अनुवादिका-गायत्री वन्द्योपाध्याय, श्रीमद्भगवद्गीता, गीताप्रेस गोरखपुर-273005 (भारत) पृष्ठा-181.
3. श्रीमद्भगवद्गीता 4।34
4. अतुलचन्द्रसेनः श्रीमद्भगवद्गीता, हरफ प्रकाशनी, ए-126, 127 कलेज स्ट्रिट मार्केट, कलकाता-700007, प्रथमप्रकाश-1936, पृष्ठा-206.
5. श्रीमद्भगवद्गीता 4।39
6. श्रीसदान्दयोगीन्द्रसरस्वतीप्रणीतः अनुवाद ओ टिका स्वामी अमृतत्त्वानन्द, उद्बोधन कार्यालय, कलकाता, प्रथमसंस्करण-श्री श्री ठाकुरेर तिथिपूजा 1404, पृष्ठा-17

## ग्रन्थसूची

1. श्रीमद्भगवद्गीता (बङ्गपुस्तकम्). अनुवादकः व्याख्याकारश्च- स्वामी भूतेशानन्दः. कलिकाताः उद्बोधन-कार्यालयः. 2009।
2. श्रीमद्भगवद्गीता. अष्टटीकोपेता. सम्पादकः- प.वासुदेवलक्ष्मणशास्त्री-पणशीकर. दिल्ली ? चौखम्बा संस्कृत प्रतिष्ठान, 2009।
3. श्रीमद्भगवद्गीता.रामानुजभाष्यं बङ्गानुवादसहितम्. अनुवादकः- श्रीमद्यतीन्द्ररामानुजाचार्यः. कोलकाता ? श्रीबलराम-प्रकाशनी, 1406 (बङ्गाब्दः)।
4. श्रीमद्भगवद्गीता. शाङ्करभाष्याद्येकादशटीकोपेता, प्रथमः भागः. संशोधकः-'साधले' इत्युपाह्व-शम्भुजनुर्गजाननशर्मा. दिल्ली ? पब्लिकेशन्स, (2014 Third Edition)।

*प्राध्यापकः,*

*पञ्चथुपी-हरिपाद-गौरीबाल-विश्वविद्यालयः, पश्चिमबंगालः।*

ISSN 2582-2608

# केदारनाथचलचित्रे अनौचित्यम्

**श्री पंकजः**

***शोधसारः-***

*16-6-2013 तमे दिनांके उत्तराखण्डस्य केदारनाथनामके स्थाने त्रासदी आगता येनाधारितम् एतत् चलचित्रमस्ति। अस्मिन् चलचित्रे त्रासदेः कारणं प्रेमविरहः प्रदर्शितः यद् अनुचितमस्ति। तेन चलचित्रेऽस्मिन् रसभङ्गः जायते। पुनश्च समाजे कुप्रभावोऽपि सम्भाव्यते। बहवः आलोचकाः अस्य कथानकस्य आलोचनां कृतवन्तः। तेनैव क्रमे मयापि एकः विचारः प्रस्तुतः। साहित्यशास्त्रदिशा सप्रमाणं चलचित्रस्यास्य समालोचनापि विहिता। चिन्तनमेतत् नूनं राष्ट्रहिताय छात्रहिताय च उपयोगी भविष्यतीति मे दृढतरः विश्वासोऽस्ति।*

साहित्यम् आदिकालादेव लोकरञ्जनस्य कारणमासीत्। तत्रापि प्रमुखं स्थानं नाटकस्यास्ति। कथितमपि केनापि कविना- **काव्येषु नाटकं रम्यम्** इत्यादिः। साहित्यदर्पणे विश्वनाथेनापि प्रमाणीकृतम्- **दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्। दृश्यं तत्राभिनेयम्**[1] इत्यादिना प्रतिपादनेन विश्वनाथेन स्पष्टं कृतं यत् लोके अभिनयात्मकं यत्किञ्चिदपि दृश्यते तत्सर्वमपि दृश्यकाव्ये अन्तर्भवति। एतस्मात् वयमाधुनिकचल-चित्रमपि काव्यत्वे स्वीकर्तुं शक्नुमः। सहैव अष्टादश-रूपकेषु प्रकरणनामके रूपके आधुनिकचलचित्रस्य स्थानं भवितुमर्हति। यतः प्रकरणस्य कथावस्तु काल्पनिकं भवति। कथितमपि विश्वनाथेन-

**भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम्।**
**शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्।**
**सापायधर्मकामार्थपरो धीरप्रशान्तकः।।**[2] इति।

अनेन स्पष्टमस्ति यत् आधुनिकस्य चलचित्रस्यापि काव्ये ग्रहणं युक्तियुक्तमस्ति। तस्माद् वयं चलचित्रस्यापि समीक्षणं कर्तुं शक्नुमः। अनेन आधारेणैव मया अत्र केदारनाथ इति हिन्दीभाषया निर्मितं चलचित्रं स्वीकृतमस्ति। 7-12-2018 तमे दिनाङ्के प्रथमवारं अस्य चलचित्रस्य प्रदर्शनम् अभवत्। एतस्य चलचित्रस्य निर्देशकः लेखकश्च अभिषेककपूरः वर्त्तते।

**चलचित्रस्य कथानकम्-**

धनाढ्यहिन्दुब्राह्मणसमाजस्य बालिकायाः मुस्लिमसमाजस्य बालकेन सह प्रेमप्रसङ्गः प्रथितः। यत्र बालिकायाः पिता समाजश्च अस्य प्रेमप्रसङ्गस्य विरोधं करोति। एतस्मात् नायिका साराखाँ दुःखिता भवति पुनश्च वदति यदि आवयोः मेलनं न भविष्यति तर्हि प्रलयः आगमिष्यति। तदनन्तरं सा नद्यां विलीना भवति, तत्क्षणमेव प्रलयः आयाति।

**कथानकस्य संबन्धः-**

अस्य कथानकस्य संबन्धः केदारनाथत्रासदीतः वर्त्तते। 16-6-2013 तमे दिनांके उत्तराखण्डस्य केदारनाथनामके स्थाने त्रासदी आगता येनाधारितम् एतत् चलचित्रमस्ति।

**ध्वन्यालोकानुसारं कथानकं कथं स्यात्-**

**विभावभावानुभावसञ्चार्यौचित्यचारुणः।**
**विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा।।**
**इतिवृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम्।**

**उत्प्रेक्ष्याऽप्यन्तराभीष्टरसोचितकथोन्नयः।।**

**सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।**

**न तु केवलया शास्त्रस्थितिसम्पादनेच्छया।।**

**उद्दीपनप्रशमने यथावसरमन्तरा।**

**रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः।।**

**अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।**

**प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्।।**[3]

एतेन वर्णनेन ध्वन्यालोककारेण स्पष्टतया प्रतिपादितं यत्- यस्मात् स्थानात् वयं प्रबन्धं कथानकं वा स्वीकुर्मः तस्मिन् रसानुगुणम् एव परिवर्तनं कल्पना वा करणीया न तु रसविरुद्धम्। यदि तत्र रसविरुद्धा कल्पना क्रियते तदा तत्र रसभङ्गः जायते। अयमेव रसभङ्गः अनौचित्य-नाम्ना ज्ञायते। अस्मिन् सन्दर्भे आनन्दवर्धनाचार्यः प्रतिपादयति-

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।**

**प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।।**[4]

ध्यानेन पश्यामश्चेत् केदारनाथचलचित्रे अनौचित्यं प्रदर्शितमस्ति। तेन दर्शकानां मनसि कुठाराघातोऽपि जायते। यतः कथितमपि विश्वनाथेन-

**दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरं च यत्।**

**शयनाधरपानादि नगराद्यवरोधनम्।।**

**स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः।।** [5]

आधुनिककाले लोकाः चलचित्रे एव लीनाः भवन्ति। अतः नाटकस्य लक्षणे आगतोऽयमंशः सर्वैरपि चलचित्रनिर्मातृभिः अवगन्तव्यः। यतः चलचित्रं सर्वेऽपि परिवारसदस्याः सम्भूय अवलोकयन्ति तस्मात् तत्र किमपि व्रीडाकरं तत्त्वं न स्यादिति। किन्तु आधुनिककाले प्रायः नवति-प्रतिशतचलचित्रेषु व्रीडाकराणि तत्त्वानि दृश्यन्ते। येन समाजे कुप्रभावः जायमानोऽस्ति ।

**केदारनाथचलचित्रे अनौचित्यम्-**

* केदारनाथचलचित्रं 16-06-2013 तमे घटितायां केदारनाथत्रासदी-आधारितमस्ति। घटनेयं सत्यमस्ति।

पुनश्च सर्वेऽपि अस्याः विषये जानन्ति। किन्तु चलचित्रे यद् कारणं त्रासदेः प्रदर्शितं तत् सत्यं नास्ति। इयं त्रासदी प्रेम-विरहकारणात् नागता अपितु अस्य कारणं पर्यावरणप्रदूषणं भवितुम् अर्हति अथवा तीर्थस्थाने प्रकृतेः अत्यधिकं दोहनं वा भवितुमर्हति, किन्तु केदारनाथचलचित्रे एतस्मात् विपरीतं प्रेमविरहः कारणरूपेण प्रदर्शितः। एतत् नास्ति वरम्।

* केदारनाथः हिन्दुसम्प्रदायस्य पवित्रं तीर्थस्थानं वर्त्तते। प्रतिवर्षं लक्षशः जनाः अत्र भगवतः दर्शनाय आयान्ति। एतेन चलचित्रेण तेषां भावनासु प्रहारः जायते। एतस्मात् चलचित्रमेतत् ईश्वरभक्तेषु हीनभावनायाः जागरणं करोति, अतः चलचित्रमेतद् अनौचित्यं पुष्णाति।

* यत् त्रासदेः मुख्यं कारणम् आसीत् तद् न प्रदर्शितमेव एतस्मात् सहृदयानाम् अन्तःकरणे एकः ध्वनिः समुत्पन्नः भवति-एतद् असत्यमिति। अनेन तत्क्षणमेव रसभङ्गः जायते अतः चलचित्रमेतद् अनौचित्यं पुष्णाति।

ISSN 2582-2608

**समाजे एतस्य कुप्रभावः-**

समाजे बहूनि प्रेमयुगलानि विरहे दुःखम् अनुभवन्ति, एतत् चलचित्रं दृष्ट्वा तानियुगलानि अपि आत्महननाय प्रयासरतानि भविष्यन्ति, एतेन विश्वासेन यत् प्रलयः आगमिष्यतीति।

हिन्दीभाषायाम् एका उक्तिः वर्त्तते- **साहित्य समाज का दर्पण है**। अर्थात् साहित्यस्य साक्षात् सम्बन्धः समाजेन भवति। यथा साहित्ये वर्णनं क्रियते तथैव समाजेऽपि साक्षात् प्रभावः भवति। आधुनिकयुगे चलचित्रमपि साहित्यमेव वर्त्तते। नाट्यशास्त्रकारानुसारम्। पुनश्च साहित्यदर्पणकारोऽपि दृश्यकाव्यं स्वीकरोति।

यदि चलचित्रे समाजानुगुणं प्रदर्शनं न क्रियते तदा तस्य समाजे कुप्रभावः भवति। एतस्मात् चलचित्रे कदापि रसभङ्गः न स्यात्। पुनश्च अस्माकं दायित्वं समाजनिर्माणस्यापि वर्त्तते। सुसंस्कृतसमाजस्य निर्माणं सुसंस्कृतसाहित्येन चलचित्रेण च भविष्यति, अतः अस्मिन् क्षेत्रे प्रयासः करणीयः। एतस्मात् चलचित्रे काव्ये वा अनौचित्यं न भवेदेव इति।

अन्ततो गत्वा एवं वक्तुं शक्यते यत् चलचित्रमिदं पूर्वाग्रहेण प्रभावितस्य चिन्तनस्य परिणामस्वरूपमस्ति। पुनश्च अनेन हिन्दुधर्मस्य श्रद्धायां कुठाराघातः कृतोऽस्ति। अत्र ध्यातव्यमस्ति यत्- सम्प्रति लोककल्याणाय उत्तमानां चलचित्राणाम् आवश्यकतास्ति। अस्याः आवश्यकतायाः पूर्त्तिर्भवेत् तदर्थं शोधस्य आवश्यकता। नाट्यशास्त्रस्य आधारेण कश्चित् तादृशः ग्रन्थः लेखनीयः यत्र आधुनिकचलचित्रनिर्माणाय मार्गदर्शनं भवेत्। एतदर्थं सर्वकारस्य सहयोगोपि अपेक्षितोऽस्ति। यदि कार्यमिदं भविष्यति तदा लेखस्यास्य सार्थकता भविष्यतीति।

## पादटिप्पणी

1. साहित्यदर्पणः 6.1
2. साहित्यदर्पणः 6.224-225
3. ध्वन्यालोकः 3.10-14
4. ध्वन्यालोकः तृतीय उद्द्योतः
5. साहित्यदर्पणः 6.17-18

## सन्दर्भ-सूची

1. https://hi.m.wikipedia.org>wiki
2. https://www.youtube.com/watch?v=GPcol..
3. 222.amarujala.com
4. ध्वन्यालोकः।
5. नाट्यशास्त्रम्।
6. साहित्यदर्पणः।
7. काव्यप्रकाशः।

*सहायकाचार्यः,*

*साहित्यविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः, बलाहरः, हि. प्र.।*

ISSN 2582-2608

# ''छन्दसरनुच्छादः''- एकमध्ययनम्

श्री प्रतापकुमारमेहेरः

*शोधसारः-*

*छन्दो वैदिकषडङ्गेषु गण्यते। यथा वेदस्याऽन्यान्यङ्गानि महत्वपूर्णानि सन्ति, तथैव छन्दोमहत्वमपि न कस्मादङ्गान्न्यूनम्। छन्दो वेदस्य पादौ कथ्यते। पादार्थश्चरणो भवति। यथा पादरहितो जनो गन्तुमसमर्थो भवति, तथैव छन्दो विना वेदस्य गतिर्नास्ति। अतो वेदाश्छन्दसमाश्रिताः सन्ति। अतश्छन्दसामधिकं महत्वं वर्तते। यदानीं छन्दसां विकासोऽभवत् तदानीं छन्दो द्विधा भूतं वैदिकं लौकिकं चेति। तद् द्विधा भूतं छन्दः सुरक्षितुं छन्दोलक्षणकाराः आचार्यास्तन्नियमान् रचयितुं प्रारभन्त। छन्दोरचनाग्रन्थाश्छन्दोनियामकाश्छन्दः शास्त्रीयग्रन्थाः , छान्दसग्रन्थाः, लाक्षणिकग्रन्थाः वा कथ्यन्ते। ललितमधुरा रचना छन्दसा एवोद्भासते। वास्तवतया परिशील्यमाने छन्दसा एव साहित्यस्य परिपुष्टिं याति। साहित्यसङ्गीतकलाप्रियजनेषु छन्दसः ज्ञानमवश्यं भवेदिति सिद्धं मतम्।*

**1.1. छन्दसः सामान्यः परिचयः-**

'छन्दोहीनो न शब्दोऽस्ति न छन्दश्शब्दवर्जितम्'- इति वचनानुसारं भरतमुनिः स्पष्टतया सूचयति यत् छन्दविरहितो शब्दः नास्ति तथा शब्दहीनो छन्दोऽपि नास्ति। अर्थात् अखिलसंस्कृतवाङ्मयः छन्दोमयः। अतः छन्दोऽनुशासने निगदितमस्ति-

**छन्दोभाग्वाङ्मयं सर्वं न किञ्चित्छन्दसा विना**[1] इति।

एतत् समर्थयन् निरुक्तस्य टीकाकारः दुर्गाचार्यः कथयति-

**नाच्छन्दसि वागुच्चरति**[2] इति।

छन्दसा विना शब्दस्योच्चारणमपि सम्भवपरो नास्ति। छन्दविहीनपद्यकाव्यापेक्षया छन्दोबद्धकाव्ये बहु आनन्दः संप्राप्यते। अत एव मम्मटः स्वकाव्यप्रकाशे काव्यप्रयोजनप्रसङ्गे ''सद्य परनिर्वृत्तिः'' इति उच्चार्य छन्दोबद्धकाव्यम् अतीव आनन्ददायकम् इति असूचयत्। छन्दोबद्धपद्यं रचनायाः साफल्यार्थम् उद्दिष्टं भवति। छन्दसाहित्यस्य नियमेन यदि काव्यस्य रचना न क्रियते तर्हि सुश्राव्यकाव्यं दुःश्राव्यत्वेन परिगण्यते। छन्दनियमं विना यः काव्यपाठं करोति, एवं प्रतीयते यत् गोः शब्दं करोति उत केनापि कपोलप्रदेशस्योपरि चपेटाप्रहारं प्रदीयते। तदर्थमुच्यते यः मानवः छन्दवर्जितं काव्यपाठं करोति सः हस्ते स्वस्य शिरस्य छेदनाय प्रवृत्तो भवति। यथोच्यते-

**छन्दो लक्षणहीनं सभासु काव्यं पठन्ति ये मनुजाः।**
**कुर्वन्तोऽपि स्वेन स्वशिरच्छेदं न ते विदुः।।**[3]

**1.2. छन्दशब्दस्य व्युत्पत्तिः-**

छन्दः संस्कृतवाङ्मयस्य मूलभूततत्वं भवति। वैदिकवाङ्मये 'छन्द' इत्यस्य नैकविधार्थाः संप्राप्स्यन्ते। ब्राह्मणग्रन्थे 'सूर्यरश्मि' इत्यर्थे छन्दसः प्रयोगः कृतः। पुराणेऽपि सर्वत्र सूर्यस्य सप्तरश्मयः छन्द इति पदेन संङ्केतिताः। इतोऽपि गायत्र्यादिछन्दसप्तकस्य कृते अग्नेः सप्तधामनाम्ना आख्यायितम्। छन्दसः प्रादुर्भावः सर्वत्र आसीदिति स्पष्टं प्रतिभाति। यदर्थं जीवनस्य प्रत्येकस्मिन् क्षेत्रे अस्य प्रयोगः जात एवञ्च सूर्यरश्मिः, अग्निधामः, प्राणः तथा रसादिरूपेणास्य नामानि संस्थापितानि।

छन्दशब्दः 'छन्दस्' धातोः निष्पन्नः। छन्दस्-'चदि आह्लादने' धातोः असुन् प्रत्यये युक्ते छन्दशब्दस्य निष्पत्तिः। अपि च 'छदि संवरणे' धातोः असुन् प्रत्ययस्य युक्तेऽपि अस्य निष्पत्तिः स्वीक्रियते। यस्यार्थः भवति- आच्छादनं तथा आवरणम्, प्रसन्नता, आह्लादो इत्यादि।

निरुक्तकारः यास्कस्य मतानुसारं-'छन्दांसि छादनात्' नाम आच्छादयतीति छन्दः। यथा प्रोक्तम्-''छादयन्ति ह वा एनं पापात् कर्मणः'' इति।

अग्निरूपप्रजाभ्यः स्वरक्षार्थं देवाः छन्दसः आश्रयः नीतः। ते छन्दसा स्वस्याच्छादनम् अकुर्वन्। एतत् छन्दसः छन्दत्वं भवति। ''अग्निरूपात् प्रजापतिरग्निमचिनुत, स क्षुरपाविर्भूत्वाऽतिष्ठत्, तं देवा बिभ्यतो नोपायन्तच्छन्दसां छन्दस्त्वम्।'' अनेनैव प्रकारेण छन्दशब्दः बहुषु अर्थेषु प्रयुक्तो भवति। पद्यस्यार्थः–'पदं चरणम् अर्हतीति'। चरणेषु उपनिबद्धं भवतीति अर्थोऽयं सुसम्पन्नः। छन्दोबद्धं भवति पद्यम्। संस्कृतकवयः छन्दहीनशब्दस्य परकल्पनापि न कुर्वन्ति। छन्दहीनशब्दावली गद्यं भवति।

**1.3. छन्दसः स्वरूपम्–**

यस्यां रचनायां वर्णः, मात्रा, लयः, गतिः, यति एवञ्च चरणान्तसम्बन्धिनियमानां वर्णनमस्ति, सा रचना छन्दत्वेन उच्चार्यते।

कात्यायनमुनिना 'सर्वानुक्रमणी'–इत्यत्र छन्दसः स्वरूपादिविषये उल्लिखितमस्ति यत्– **यदक्षरपरिमाणं तच्छन्दः[4]।**

आचार्यः पिङ्गलमुनेः 'छन्दःसूत्रे' हलायुधस्य वृत्तौ अपि अक्षरसंख्यायाः अवच्छेदकं तावत् 'छन्द' इत्युच्यते–

''छन्दःशब्देनाक्षरसंख्यावच्छेदकमुच्यते।'' इति।

''छन्दः शब्देनाक्षरसंख्यावच्छेदोऽत्राभिधीयते''। आचार्यो भरतोऽपि नियताक्षरबन्धोऽपि 'छन्द' इत्युच्यते। यथा–

''नियतानि निश्चितानि अक्षराणि यस्मिन् स बन्धः नियताक्षरबन्धः एव छन्दः।'' इति।

**नाट्यशास्त्रे यथोच्यते–**

**निबद्धाक्षरसंयुक्तं यतिच्छेदसमन्वितम्। निबद्धन्तु पदं ज्ञेयं प्रमाणनियतात्मकम्।।**
**एवं नानार्थसंयुक्तैः पादैर्वर्णविभूषितैः। चतुर्भिस्तु भवेद्युक्तं छन्दोवृत्ताभिधानवत्।।[6]**

लौकिकछन्दसः स्वरूपवर्णने वाल्मिकेः मुखात् आद्यछन्दसः निरूपणं श्लोकरूपेण संजातम्। यथा–

**मानिषाद ! प्रतिष्ठां त्वमागमः शास्वती समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।[7]**

प्रस्पुटितशब्दस्यास्य प्रकाशने वाल्मीकेः मनसि विचारः समागतः यत् अस्याः वाण्याः चतुःचरणानि एवञ्च सर्वेषु चरणेषु समानमक्षराणि तथा लयनादयोः युक्तं निश्चितं श्लोकः भवत्याह–

**पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः।**
**शोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा।।[8]**

**1.4. गणानां देवताः तथा शुभाशुभफलमक्षरञ्च–**

गुरुलघुनिर्मयार्थमपि उच्यते यथा–

| **संख्या** | **गणनाम** | **रूपम्** | **देवता** | **फलम्** | **मित्रादि** | **शुभाशुभे** |
|---|---|---|---|---|---|---|
| 1 | मगणः | ऽऽऽ | मही | लक्ष्मीः | मित्रम् | शुभम् |
| 2 | यगणः | ।ऽऽ | जलम् | आयुः | दासः | शुभम् |
| 3 | रगणः | ऽ।ऽ | अग्निः | दाहः | शत्रुः | अशुभम् |
| 4 | सगणः | ।।ऽ | वायुः | विदेशः | शत्रुः | अशुभम् |
| 5 | तगणः | ऽऽ। | नभः | शून्यम् | उदासः | समम् |
| 6 | जगणः | ।ऽ। | रविः | रोगः | उदासः | अशुभम् |
| 7 | भगणः | ऽ।। | शशी | यशः | दासः | शुभम् |
| 8 | नगणः | ।।। | स्वर्गः | बुद्धिः | मित्रम् | शुभम् |

**1.5. छन्दसः सामान्यभेदः**

वृत्तरत्नाकरानुसारं वृत्तस्य भेदत्रयं स्वीक्रियते–

(1) समवृत्तम्

(2) अर्धसमवृत्तम्

(3) विषमवृत्तम्

यस्मिन् पद्ये चत्वारि चरणानि समानानि, तत् समवृत्तम्, यस्य पद्यस्य द्वे द्वे चरणे समाने, तत् अर्धसमवृत्तम्। एवञ्च यस्य चत्वारि चरणानि भिन्नानि, तत् विषमवृत्तम् इत्युच्यते। तेषु चरणेषु विश्रामस्थलं 'यति' इत्युच्यते। ''यतिर्विच्छेदसंज्ञिता'' इति। अनेन पद्यस्य लये माधुर्यम् अर्थस्यानुसन्धाने च सारल्यं जायते। यतोहि छन्दोबद्धरचनायां कविः सर्वदा स्वतन्त्रः भवति। अतः सः यथा इच्छति, तथैव शब्दान् चरणेषु स्थापयति।

**1.6. छन्दसः सामान्यभेदः**

छन्दः द्विविधः

(1) अक्षर (वर्णः) (2) छन्दमात्राछन्दः (गणछन्दः)

* गुरोः मात्राद्वयम् (2)

* लघोः एका मात्रा (1)

**1.7. उपसंहारः–**

काव्यरचनाऽवसरे कवयः नियमानुसारं छन्दसां प्रयोगं कुर्युः। यतः रसानुगुणं छन्दो विधीयते। अन्यथा रसाभिव्यक्तिः हृद्या न भवति। यथा विप्रलम्भशृङ्गारे मन्दाक्रान्ता, करुणरसादिषु वियोगिनी, देवताप्रार्थनासु शिखरिणी–स्रग्धरा–शार्दूलविक्रीडितानि कविभिः व्यवह्रियन्ते। छन्दसां गणनानुसारं देवताः सन्ति। तेषां नियमपूर्वकं काव्ये प्रयोगेन देवानुग्रहोऽपि प्राप्तुं शक्यते। छन्दश्शास्त्रद्वारा भाषायां लालित्यम् अर्थवैचित्र्यञ्च जायते। पद्यस्य रचना चरणचतुष्टयेन विधीयते। अतः पद्यस्य व्युत्पत्तिः क्रियते–''पदम् अर्हतीति पद्यम्''। अनेन वृत्तमात्रं पद्यमिति उच्यते। अतः काव्येषु 'छन्दसरनुच्छादः' नितान्तमावश्यकम्।

## पादटिप्पणी

1. छन्दोऽनुशासनम्, 1.2
2. निरुक्तम् 6/2
3. छन्दःकौस्तुभः – 4
4. ऋक्सर्वानुक्रमणी 2.6
5. पिङ्गलमुनेः छन्दःसूत्रम् 2.1
6. नाट्यशास्त्रम् 14/43–44
7. वाल्मीकिरामायणम् , बालकाण्ड 2.15
8. वाल्मीकिरामायणम् , बालकाण्ड 2.18

## संन्दर्भग्रन्थसूची

1. छन्दःशास्त्रम्, प.अनन्त शर्मणा संशोधितम्, Parimala Publication , Delhi-110093, 2012
2. श्रुतबोधः, चौखम्बा संस्कृत संस्थान, वाराणसी, 221001, 2002
3. संस्कृत–छन्दोविधान–विमर्श, डॉं. विनोद कुमार गुप्त, संरचना प्रकाशन, इलाहाबाद, 2012
4. छन्दःकौमुदी, पं.श्री नारायणशास्त्री शिस्ते, चौखम्बा संस्कृत संस्थान, 2008, वारणसी, 221001
5. खण्डान्वयदण्डान्वज्ञानम् तथा छन्दज्ञानम्, श्री. प्रताप कुमार मेहेर, ह्रस्ह, सम्बलपुरम्, ओडिशा

*शैक्षिकपरामर्शदाता,*

*ओडिशाराज्यमुक्तविश्वविद्यालयः, सम्बलपुरम्, ओडिशा।*

ISSN 2582-2608

# श्रीपरशुरामविजयमहाकाव्ये वर्णितपरशुरामकालीनवर्ण–व्यवस्थायाः वर्तमानकालीनवर्णव्यवस्थायाश्च समीक्षणम्

**सुश्री आरती**

***शोधसारः–***

*अस्मिन् शोधपत्रे श्रीपरशुरामविजयमहाकाव्ये वर्णितवर्णव्यवस्थायाः वर्तमानकालीनवर्णव्यवस्थायाः च संक्षिप्तवर्णनमस्ति। ज्ञायते एव यत् प्राचीनवर्णव्यवस्था कथं गुणकर्मसु च आधारिता आसीत्। यस्य बृहत्तममुदाहरणं भगवान् परशुराम एव अस्ति। परन्तु वर्तमानकालीनवर्णव्यवस्था गुणकर्मेषु आधारिता न भूत्वा, पूर्णतः जन्मनि आधारिता अस्ति। यस्य उदाहरणत्वेन वर्तमानसमये डॉ. भीमराव अम्बेडकरं स्वीकर्तुं शक्यते।*

भारतस्य सामाजिक–इतिहासे वर्णव्यवस्थायाः महत्वपूर्णं स्थानमस्ति। वैदिककालात् अद्यपर्यन्तं सम्पूर्णे भारते सामाजिकविभाजनरूपेण या दृश्यते। सम्भवतः मानवानां मनोवैज्ञानिकसामाजिकस्य आवश्यकतान्ः विचारित्वा अस्याः प्रारम्भः क्रियते। अस्याः मुख्योद्देश्यं सामाजिकव्यवस्थायाः संगठनस्य च स्थायित्वप्रदानमासीत्। सुनियोजितानां संगठितसामाजिकसंस्थानां माध्यमेन भारतीयसमाजः प्राचीनकालात् एव सन्तुलितमस्ति। सामाजिकसंरचनायाः सुदृढीकरणाय स्थिरीकरणाय च अनेकाः संस्थाः निर्मिताः भवन्ति। येन समाजस्य प्रत्येकस्य जीवस्य आवश्यकताः पूर्णाः भवेयुः तथा च ते परस्परं विकासे योगदानं ददतु यस्मात् समाजे शान्तिः भवेत्। भारतीयसंस्कृतौ अपि एषः विभागः वर्णव्यवस्थारूपेण दृश्यते। वर्णव्यवस्था मनुष्यस्य सामाजिकानामुत्तरदायित्वानां निर्धार्य विभिन्नवृत्तिभिः समाजं संगठितं कृत्वा मनुष्याणां परस्परहितेषु समन्वयं स्थापयितुं प्रयत्नः अस्ति। ऋग्वैदिककालस्य अनन्तरं यदा समाजे जनानामावश्यकताः वर्ध्दिताः, तदा मानवैः कृतकर्मानुसारेण समाजः चतुर्धा विभक्तः। ऋग्वेदस्य दशमे मण्डले चतुर्वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां यथाक्रममुत्पत्तिः विराटपुरुषात् भवतीति प्रख्यापितम्। तद्यथा–

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**उरु तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥**[1]

श्रीमद्भगवद्गीतायां वर्णानामुत्पत्तिः विषये भगवानुवाच अहं गुणकर्मणोः चाधारे चतुर्णां वर्णानामुत्पत्तिं कृतवान्। उदाहरणम्–

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। तस्यकर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥**[2]
**ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप। कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥**[3]

प्राचीनकाले वर्णव्यवस्थायाः अन्तर्गतं विभिन्नवर्णान् वा समूहान् तस्याः प्रधानगुणकर्मणोः चाधारे विभागः कृतः। एवं तयोः कर्माणि प्रबलरूपेण व्यवस्थितानि। ये जनाः अध्यापनादीनि षट्कर्माणि स्वीकृतवन्तः। ते ब्राह्मणवर्गे अन्तर्भूताः। प्रजारक्षणादीनि क्षत्रियस्य अभूवन्। पशूनां पालनादीनि कर्माणि ये जनाः ग्रहितवन्तः,वैश्यवर्गे परिगणिताः। ब्राह्मणादिवर्णत्रयपरिचर्यात्मकं कर्म शूद्राणां कर्म अजायत। अनेन प्रकारेण वर्णानां इमानि प्रधानकर्माणि आसन्। यस्मात् समाजे चतुर्णां वर्णानामुत्पत्तिः अभवत्। प्राचीनसमये वर्णानामुत्पत्तेः मूलकारणं कर्म एव आसीत्। अस्य उत्कृष्टमुदाहरणं भगवान् परशुरामः आसीत्। भगवतः परशुरामस्य भृगुवंशे मातुः रेणुकायाः पितुः जमदग्नेः च पुत्रत्वेना अभवत्। परशुरामः शस्त्राणां शास्त्राणां च सर्वासु विद्यासु पारंगतः विद्वान् आसीत्। महाभारतकालस्य भीष्मद्रोणाचार्यकर्णान् वीरयोद्धृन् अस्त्रशस्त्राणां शिक्षां प्रादात् श्रेष्ठगुरुः भगवान् परशुराम एव आसीत्। तद्यथा–

**अग्रतः चतुरो वेदाः पृष्ठतः सशरं धनुः। इदं ब्राह्म इदं क्षात्रं शापादपि शरादपि॥**

एवं स्पष्टं भवति यत् भगवान् परशुरामः कर्मणा क्षत्रियः अभवत् न तु जन्मनाः। परशुरामस्य पितामह्याः सत्यवत्याः भ्राता विश्वामित्रोऽपि जन्मतः क्षत्रियोऽऽसीत् किन्तु कर्मणा ब्राह्मणो बभूव। महाराजगाधिकीर्तिमत्योः पुत्रः विश्वामित्रः सुदीर्घकालं यावत् न्यायेन पृथ्वीम् अपालयत्। तदन्तरं ब्रह्मतेजः महाशक्तिशालीमुक्त्वा राज्यं त्यक्त्वा च वने गतवान्। उदाहरणम्–

**अयमेव सुविख्यातो विश्वामित्रो महामुनिः।**
**न्यायेन पालयामास चिरं गाधिसुतो महीम्।।**[4]

इति स्पष्टं जातः यत् प्राचीनकाले वर्णविभाजनस्य आधारः गुणकर्मणी आस्ताम्। कर्मणः प्रसंगे महाभारते वर्णनमस्ति यत् ब्राह्मणान् तेषामाचरणानामाधार एव ब्राह्मणः वक्तुं शक्यते। यदि शूद्रः सदाचारी अस्ति, तर्हि तस्यापि ब्राह्मणत्वं प्राप्यते। युधिष्ठिरस्य मते यस्मिन् व्यक्तौ दया-क्षमा-सदाचार-करुणा-त्यागादीनां गुणाः विद्यमानाः भवेयुः सः ब्राह्मणोऽस्ति। यस्मिन् ब्राह्मणे ये गुणाः न विद्यमानाः सन्ति सः ब्राह्मणः नास्ति। यथा-

**शूद्रे तु यद् भवेल्लक्ष्म द्विजे तच्च न विद्यते**
**न वै शूद्रो भवेच्छूद्रो ब्रह्मणो न च ब्रह्मणः।**
**यत्रैतल्लक्ष्यते सर्पवृतं स ब्रह्मणः स्मृतं**
**यत्रैतत्र भवेत् सर्पः तं शूद्रमिति निर्दिशेत्।।**[5]

मनुस्मृतौ शरीरमनसाशोचोपेतः उत्कृष्टजनानां सानिध्ये परिचरणशीलः, मृदुभाषी, निरहङ्कारी, शूद्रोऽपि उत्कृष्टां जातिं प्राप्नोति। तद्यथा-

**शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः।**
**ब्राह्मणाद्याश्रयो नित्यमुत्कृष्टां जातिमश्नुते।।**[6]

वर्तमानसमये वर्णव्यवस्था गुणकर्मणि च आधारिता न भूत्वा पूर्णतः जन्मनि आधारिता अस्ति। अद्यतनीया वर्णव्यवस्था पूर्णतः जातिव्यवस्थायां परिवर्तिता भवति स्म। प्रत्येकं वर्णस्य कृते असंख्यजातयः प्रजायन्ते। ये जनाः येषां जातिषु प्रादुर्भवन्ति ते तासां जातीनां मन्यन्ते। यथा कोऽपि अयोग्यः,अशिक्षितः मनुष्यः अस्ति किन्तु ब्राह्मणवर्णे जातौ वा उत्पन्नं भवति स्म, तथापि सः सर्वेषां कृते पूजनीयः एव मन्यते। यद्यपि डॉ. भीमराव अम्बेडकरः भारतीयबहुज्ञः, विधिवेत्ता, अर्थशास्त्री, राजनीतिज्ञः भाषाविद् विद्वानः च आसीत्। सः स्वतन्त्रभारतस्य प्रथमः न्यायमन्त्री, भारतीयसंविधानस्य जनकः, भारतगणराज्यस्य संस्थापकेषु अन्यतमः च आसीत्। तस्य पाण्डित्यात् ब्राह्मणः इति वक्तुं शक्यते, परन्तु सः शूद्र एव उच्यते। इति स्पष्टं भवति वर्तमानकाले जातिव्यवस्थायां वा वर्णव्यवस्थायां गुणानां कर्मणां च महत्वं पूर्णतः समाप्तः जाता।

## पादटिप्पणी

1. ऋग्वेदः 10/90.12
2. भगवद्गीता 04/13
3. भगवद्गीता 18/41
4. श्रीपरशुरामविजयमहाकाव्यम् 1/126
5. महाभारतम्, वनपर्वः 180/25-26
6. मनुस्मृतिः 09/335

## सन्दर्भग्रन्थसूची


1. श्री परशुराम विजयः महाकाव्यम्, प्रणेता श्री जगदीशचन्द्रशास्त्री, प्रतिभा प्रकाशन दिल्ली, 1997
2. भगवान् परशुराम, कन्हैयालाल माणिकलाल मुन्शी, राजकमल प्रकाशन बम्बई, 2019
3. परशुरामदिग्विजय महाकाव्यम्, छज्जुराम शास्त्री विद्यासागर।
4. श्री परशुरामस्त्रोतम्, श्रीमदमृतवाग्भव, श्री विद्या प्रकाशन नई दिल्ली, 1987
5. ऋग्वेदसंहिता, सायणभाष्य, कृष्णदास अकादमी, पो. बा.118 चित्रा सिनेमा बिल्डिंग चौक, वाराणसी, 1983
6. महाभारत, व्यास, शास्त्रीरामनारायण, गीताप्रेस, गोरखपुर।
7. काणे. पी.वी. धर्मशास्त्र का इतिहास।
8. श्रीमद्भगवद्गीता,गीताप्रेस गोरखपुर- 273005,संवत् 2074
9. मनुस्मृतिः, चौखम्भा संस्कृत संस्थान, संस्करण तृतीय वि. संवत् 2039
10. बाबासाहेब डॉ. अम्बेडकर सम्पूर्ण वाङ्मय खण्ड- 26, प्रकाशक- डॉ. अम्बेडकर प्रतिष्ठान 15 जनपथ, नई दिल्ली।


*शोधछात्रा, मार्गनिर्देशिका- प्रो. ग़ज़ाला अंसारी*

*साहित्यविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, लखनऊपरिसरः, लखनऊ*

ISSN 2582-2608

# नित्यानन्दस्मृतितीर्थप्रणीतानां रूपकाणां समीक्षात्मकमध्ययनम्

**श्री चिरञ्जितराय:**


*शोधसारः-*

*भारतीयसंस्कृतौ बङ्गभूमेरवदानमनस्वीकार्यम्। बङ्गप्रतिभाया: सहस्रदिग्व्यापिनी विकासशीलता सुप्राचीनकालतो बहुविधेषु सांस्कृतिकविषयेषु गौरवावहं स्थानमधिकृतवती। तेषु साहित्यसृष्टिकर्मणि प्राधान्यं लभते। साहित्यचर्चापरम्परायां साम्प्रतिके काले श्रीजीवन्यायतीर्थ-हरिदाससिद्धान्त-वागीश-पञ्चाननतर्करत्नैः सह नित्यानन्दस्मृतितीर्थस्य नाम उल्लेखनीयम्। नित्यानन्दस्य काव्यप्रतिभा यदि सूक्ष्मेक्षिकया विचार्यते, तदा तस्य रचनाया: वैशिष्ट्यानि नो दृग्गोचरीभवति। स विविधान् विषयान् अलंकारशास्त्रोक्तदिशा क्वचित् संरक्ष्य क्वचित् परिवर्त्य स्वीयरचनासु व्यवहृतवान्, एतानि यानि परिवर्तनानि काव्येषु नो नयनयोरापतन्ति, तानि आधुनिकसंस्कृतसाहित्यस्य दृष्टान्तरूपेण स्थानं प्राप्नुवन्ति।*


**कूटशब्दाः**- आधुनिकसंस्कृतसाहित्यम्, रूपकम्, नित्यानन्दस्मृतितीर्थः, पौराणिककथा, बङ्गप्रदेशः॥

कविरयं रूपकविरचने सुतरामासीन्निष्णातः। तेन प्रायेण अष्टाधिकैकशतनाटकानि ग्रथितानि तेषु नाटकेषु कानिचिद् ऐतिहासिकमूलकानि, कानिचिच्च जीवनचरिताश्रितानि, कानिचिद्वा आधुनिकविषयाधारितानि, कानिचन पुनः पौराणिकवृत्तकल्पितानि, अवशिष्टानि प्रायेणानुवादरूपाणि च हावडासंस्कृतसाहित्यसमाजेन प्रकाशितं नित्यानन्ददृश्य-काव्यसंकलनम्। तत्र सर्वेषां नाटकानां मूलं नासीत्। तत्र 'श्रीवाल्मीकित्वलाभम्', 'रहमतखानवृत्तान्तम्, 'वङ्गकीर्तिविधानम्', 'आनन्दमठम्', 'बालेश्वरमहायुद्धम्', 'कालिदासः', 'सम्मत्तिसमर्पणम्', 'गुप्तधनम्', 'ध्रुवप्रसादनम्', 'महिषासुरलाञ्छनं' चेति नाटकानि वर्तन्ते। किञ्च नित्यानन्दस्य नाटकेषु 'मेघदूतम्', 'तपोवैभवम्', 'प्रह्लादविनोदनम्', 'सीतारामाविर्भावम्' चेति अन्यतमत्वं भजन्ते तस्य प्रसिद्धनाटकानां विषये समासतः पर्यालोचनं क्रियते-

**मेघदूतम्**- कालिदासस्य मेघदूतस्यावलम्बनेन पञ्चाङ्कविशिष्टं गीतात्मकनाटकं तावत् 'मेघदूत'मिति। इह नाटके मेघदूतस्य भाववाक्यच्छन्दांसि बहुत्रैवोद्धृतानि।

नाटकेऽस्मिन् यक्षपत्नी वनान्तरं यक्षम् अन्विष्यन्ती परिभ्रमति। सा विरहवशात् वृक्षादीन् पतिविषयान् प्रश्नान् परिपृच्छति। शरदि यक्षस्य सविधे कृष्णवर्णीयो मेघो यक्षिणी-विषयकवार्तामादाय समागतः। तदा यक्षस्तं मेघं दूतीकृत्य अलकापूरीं प्रेषयति। ततः मेघः अलकापुरीं गत्वा पतिसन्देशं यक्षिण्यै श्रावयति, तस्याश्च कुशलसंवादान् नीत्वा पुनः यक्षाय निवेदयति

**तवैवार्थं प्रियप्राणा प्रियन्ते तव कान्तया।**
**तव मार्गं प्रपश्यन्त्या दास्या तेऽपेक्ष्यते सदा॥**[1]

नाटकस्यास्याङ्कास्तु दृश्येषु प्रविभक्ताः। कृष्णमेघचरित्रन्तु छायातत्त्वानुसारीति प्रतिभाति। नाट्यकृतात्र देवदासीनां सनृत्यं गीतं संयोजितम्।

**प्रह्लादविनोदनम्**- नाटकमिदं पञ्चाङ्कोपेतम्। अत्र पौराणिकचरित्रस्य प्रह्लादस्य जीवितं नाट्यकृता नित्यानन्देनोपायनी-कृतम्। विष्णोः द्वारपालकौ जय-विजयौ बालखिल्यमुनेरभिशापात् हिरण्यकशिपुहिरण्याक्षौ बभूवतुः। हिरण्यकशिपुः सदैव हरिनामसंकीर्तनस्य विरोधी आसीदिति कृत्वा स स्वपुत्रस्यैव प्रह्लादस्य शत्रुर्बभूव। कारणमस्यैतद्यत्

ISSN 2582-2608
प्रह्लादो महान् हरिभक्तः समासीत्। सोऽहर्निशं हरिनाम जपति स्म। हिरण्यकशिपुः विविधैरुपायैः प्रह्लादं हन्तुं नालम्। सर्वं नारायणमयमिति तन्मतिः मिथ्येति प्रदर्शयितुं स्फटिकस्तम्भाद् भगवतः प्रकटीकरणाय आदिदेश। तदा स्तम्भाद् आविर्भूतो नृसिंहो हिरण्यकशिपुं जघान। परं हिरण्यकशिपुः मृत्योः परं दिव्यदेहधारी बभूवा नाटकेऽस्मिन् केषाञ्चित् स्तोत्राणां निवेशो रुचिकर इति प्रतिभाति।

**सीतारामाविर्भावम्**– प्रणव पारिजातपत्रिकायाः प्रवर्तकस्य सीतारामदासोङ्कारनाथस्य पुण्याविर्भावम् उपलक्ष्य नित्यानन्देन नाटकमिदं व्यरचि। तृतीयाङ्के भगवतो नारायणस्योक्तिः संस्मरणीया 'सनातनवर्णाश्रमधर्मसंरक्षणाय ममैवांशमवतारयामि अचिरादेव भारतवर्षे'।

प्रतीकपरकमिदं नाटकम्। नातिदीर्घमङ्कत्रयं प्रायेण लघुतरदृश्येषु प्रविभक्तम्। अङ्कानां कथावस्तु मिथः सम्बद्धमिति प्रतिभाति। अत्र कलिकालस्य लोभमोहादिरिपुभिः सह दुष्प्रवृत्तीनां समासेन विवरणं प्रस्तुतं नाट्यकृता।

**तपोवैभवम्**[2]– कवयिता स्वपितू रामगोपालस्मृतिरत्नस्य तपः सिद्धजीवनमत्र प्रपञ्चितमास्ते। अन्नदानं हि रामगोपालस्य परमो धर्मः। तदुक्तं नाटके

**अन्नदानं परो धर्मः कलावस्मिन् युगे किल।**
**अन्नदानाय तेनात्र यतितव्यः त्वया सदा॥**[3]

पितुरुक्तिं रामगोपालः स्वीये जीवने प्रत्यक्षरशः अनुपालितवान्। देवीसाधकं गुरुं सच्चिदानन्दं निकषा रामगोपालः दीक्षां नीत्वा साधकत्वपदम् अलभत। निर्वहणे रामगोपालः गुरोरनुग्रहेण परमेश्वरीं मातरं साक्षात्तया पश्यति। अतिरोचकं कथावस्तु विचार्य मन्यते यन्नाटकमिदं विरलकोटिकमिति भाति।

**श्रीवाल्मीकित्वलाभम्**– पौराणिकचरितमवलम्ब्य अङ्कपञ्चके एकादशदृश्येषु च रत्नाकरस्य पुरुषस्वभावं परित्यज्य वाल्मीकेः लोकहितकरं वात्सल्यभावञ्च उपायनीकरोति व नाट्यकारो रूपकेऽस्मिन्। तस्मिन् समये साधारणजनानां दुर्दशा कियती आसीदिति हे कवेः लेखनीस्पर्शाद् अवगम्यते–'आर्त्तस्य दुःखं परिनाश्यमेव यतध्वमस्मै नियतं यूयम्'[4]। नाट्यकृता प्राचीननाट्यरीतिमवलम्ब्य नान्दी– प्रस्तावना न हि भरतवाक्यादिनायोपादानानि व्यवहृतानि। ब्रह्मणः श्रीरामस्य च स्तुतिपरका श्लोका अस्माभिः दृश्यन्ते नाटकस्य नान्दीतः भरतवाक्यं यावत्। दिङ्मात्रमुदाह्रियते—

**हे राम कार्मुकधर करुणावतार**
**हे श्यामकान्तिनिलय जगतः प्रपातः।**
**को वा तवैव चरणे शरणं विनैव**
**गम्यात्सुखं कथमहो धरणी कथं वा॥**[5]

**महिषासुरलाञ्छनम्**[6]– पण्डितेन नित्यानन्देन विरचितम् 'महिषासुरलाञ्छनम्'। नाटकस्य प्रत्यङ्कं कैश्चिद् दृश्यैर्विभक्तम्। चतुर्षु अङ्केषु क्रमशः नवदृश्यानि वर्तन्ते। नाटकमिदं साफल्येन मञ्चस्थं जातम्। किन्तु नाट्यशास्त्रीयरीत्यनुसारं सन्धि सन्ध्यङ्गादिविभाजनमत्र नास्ति। विविधच्छन्दोभिः पञ्चचत्वारिंशदधिकशतं श्लोकाः विलसन्त्यत्र कालिकापुराणस्योपाख्यानं हि नाटकस्वास्थोपजीव्यम्।

प्रथमाङ्कस्य प्रथमे दृश्ये मातृदर्शनार्थं कठोरं तपति महिषासुरः। तस्मात् प्रथमाङ्कनाम 'देवीदर्शनम्'। कठोरतपसा मातुर्दर्शनं कृत्वा तस्याः निदेशेन कार्यं कर्तुं प्रतिशृणोति–

**न जानामि मन्त्रं न वा ध्यानं तन्त्रं**
**स्तुतिं नैव जाने कथं वा भजामि।**
**कृपाख्यातिहेतोर्भजे केवलं त्वां**
**ममाम्बेति कृत्वा न चान्यत् प्रजाने॥**[7]

ISSN 2582-2608

'महिषासुरराज्याभिषेक' मिति नाम द्वितीयाङ्कस्य प्रथमे दृश्ये सुन्द उपसुन्दयोः कथोपकथनं विलसति। जन्मान्तरकथासंवलिते द्वितीयाङ्के महिषासुरस्य राज्याभिषेकवृत्तमुपनिबद्धम्। द्वितीये दृश्ये महिषासुरेण सह रम्भासुरयोः संवादो विलसति। महिषेण कथितम् 'तात! एषोऽहं भवदाज्ञां शिरसि अभिवन्द्यं निदेशञ्च पुरोवर्तिनं कृत्वा राजदण्डमिमं गृह्णामि[8]। नेपथ्यगीतेन राज्याभिषेकानुष्ठानं ज्ञाप्यते–

**स्नापय देव तीर्थजातोयैः भूषय देवं कुङ्कुमगन्धैः**
**सज्जय देवं सुन्दरवस्त्रैः पूजय देवं रत्नजमाल्यैः॥**[9]

'देवीप्रतिज्ञान' मिति तृतीयेऽङ्के असुराधिपतिना सह देवतानां विरोधः, बृहस्पति ब्रह्मा इन्द्रादिदेवानां स्वर्गत्यागः, महिषासुरस्य स्वर्गाक्रमणञ्चेति विषयाः प्रभविष्णुतया वर्णिताः। द्वितीयदृश्ये ब्रह्मा– बृहस्पतिसंवादेन इन्द्रस्य पराजयो ज्ञाप्यते। उपायान्तरं न प्रेक्ष्य देवगुरोः उपदेशेन सर्वे सम्मिल्य महाशक्तिमाराधयन्ति। प्रसन्ना देवी नेपथ्ये इन्द्रमुपदिश्य तिरोभवति। चतुर्थाङ्के गुरुणा सोमाचार्येण सह महिषासुरस्य राज्यशासनविषयकः संवादो वर्णितः ततः महिषासुरसभां कश्चन दूतः समागत्य युद्धार्थं दशभुजायाः नार्यः आगमनवृत्तान्तं कथितवान्। किन्तु गुरुणा वारं वारं युद्धाद्वारितोऽपि महिषासुरः सेनापतिं प्रेषयामास। द्वितीये दृश्ये वर्ण्यते महिषासुरं विमर्द्य महाशक्तिरूपिण्याः देव्याः दुर्गायाः आत्मप्रकाशस्तथा महिषासुराय वरप्रदानञ्च–

**भक्त्या तव प्रसन्नापि न च किञ्चिदपेक्ष्यते।**
**अद्य प्रभृति ते पूजा मया सह भविष्यति॥**

चान्तिमे संसारे अयमसुरो धर्मभावं प्रसरतु इति कथयन्नाह –

**बुद्धिहीना जननि सततं धर्मतो भ्रंशहेतोः।**
**न्यस्तं वित्तं तव चरणयोस्त्वं कृपातोऽस्तु तेषाम्॥**[10]

**अमरवीरवृत्तान्तम्**– नित्यानन्देन स्वाधीनतायुद्धे वीरस्य क्षुदिरामस्य वीरत्वव्यञ्जकं वृत्तमाश्रित्य 'अमरवीरवृत्तान्त'मिति ऐतिहासिकनाटकमेकं विरचितम्। नाटकस्यास्य प्रथमाङ्कस्य प्रथमे दृश्ये वाग्देव्याः स्तुतिर्विहिता। इयं देवी अज्ञानविनाशिका शुभ्रवर्णीया उत्तमकीर्तिमती च दृश्यते। नाटकस्यास्य नायकः क्षुदिरामः देशमातृकायाः शृङ्खलमोचनाय प्रतिज्ञाबद्धः–

**यन्नामस्मरणेनापि धन्यं भवति जीवनम्।**
**महायोद्धा महावीरः क्षुदिरामः स एव हि॥**

प्रथमाङ्कस्य द्वितीये दृश्ये अनुशीलनसमिती गुप्तपरामर्शाः प्रचलन्ति क्षुदिराम अरविन्दघोष–विपिनपाल नवीनबोसादिनेतर्णिनां मध्ये। ततः द्वितीयाङ्कस्य प्रथमे दृश्ये कार्जनादिवैदेशिकानां भारतीयजनान् प्रति अन्याय्यं निष्ठुरमाचरणं नाट्योचितभङ्ग्या परं वास्तवोचिततया वर्णितम्। तथाहि उक्तम्–

**पशुवत्पालनीयाश्च भारतीयाः सदैवाह।**
**दासामामरिकावासा पूरणीया कथं भवेत्॥**
**मितञ्च खाद्यं मितमेव वारिमितो निवासो मितमेव वासः।**
**यथार्ध्यविद्या भविता यथा न तथा व्यवसानितरां प्रकार्य्या॥**[11]

किंस्फोर्डमते, वङ्गीया बुद्धिमन्त इति कृत्वा वङ्गभङ्गः अवश्यमेव काम्यः, अन्यथा भविष्यतो विपर्ययः अवश्यम्भावीति –

**सुखानुभूतिर्न भवेद् यथैषां**
**बुद्धेः प्रकाशो भविता यथा न।**
**सम्मेलञ्चापि घटे तथैषां**
**तथैव कार्यं खलु न शासनं हि॥**

**समग्रे भारते वर्षे वङ्गदेशोऽतिदुर्द्दमः।**
**वङ्गीया बुद्धिमन्तश्च महान्तो रिपवो हि नः॥[12]**

द्वितीयाङ्के प्रथममेव अरविन्दः सखेदं कथयति यद्भारतीयैः सह आङ्गलाः मनुष्यवन्न व्यवहरन्ति । तदा विपिनपालः भणति यत् शिक्षाव्यवस्थायां ज्ञानव्यवस्था नास्त्येव। ततः क्षुदिरामस्य प्रवेशो रङ्गमञ्चे क्षुदिरामस्य परिचयं लब्ध्वा देशमातुः शङ्खलत्वमोचनाय जीवननाशो भवितुमर्हेदिति अरविन्दमतम्। परं क्षुदिरामः सदुत्तरयति देशमातुर्मुक्तये यदि जीवनत्यागोऽनिवार्यश्चेद् तद्वरम्। तत्र दुःखलवोऽपि नास्ति।

**वङ्गकीर्तिविधानम्**[13]– नित्यानन्दस्य पञ्चाङ्कविशिष्टं नाटकं 'वङ्गकीर्तिविधानम्' राजनीतिज्ञस्य पश्चिमवङ्गस्य नवरूपककृद्रूपेण प्रख्यातस्य विधानचन्द्ररायस्य जीवनाश्रितम्। नाटकस्यास्य पञ्चाङ्कं पुनः दशदृश्यैर्विभक्तम्। इह नाटके एकोनैकशत श्लोकाः विद्यन्ते। जन्मभूमेः स्तुतिपरकेण श्लोकेन नाट्यं प्रारभते नाट्यकारो नित्यानन्दोऽत्र–

**या जन्मभूमिः सततं दयार्द्रा नानोपचारैः क्षितिवारिरूपा।**
**शस्यादिमूर्तिर्हि विराजमाना सा पातु युष्मान् बहुकीर्तिमग्ना॥[14]**

नाटकस्य प्रतिच्छत्रं ध्वन्यते विधानचन्द्रस्य देशमातृकां प्रति अपारो भक्तिभावत वस्तुतः, भारतस्य स्वाधीनतादिवसस्य पालनावसरे नाटकमिदं प्रस्तुतम्। नाटकनायकस्य विधानचन्द्रस्य स्वदेशप्रेम सावलीलभङ्ग्या समभिद्योतितम्–

**जननीवरपुत्रो यः सकलेऽस्मिन् समीहते।**
**जननीं परिहायात्र कथं वा स्थातुमर्हति॥**

नाटकस्य प्रथमाङ्के द्विशतं वत्सरान् यावत् पराधीनतायाः ग्लानितो मुक्तिलाभः, जवाहरलालनेहेरुवर्यस्य प्रधानमन्त्रिपदप्राप्तिसंवादं प्राप्य विधानचन्द्रस्य स्वदेशे प्रत्यावर्तनाग्रहश्चेति वर्णितौ। द्वितीयाङ्के वङ्गस्य राज्यपालत्वेन केन्द्रियमन्त्रित्वेन च दायित्वग्रहणाय आमन्त्रणं प्राप्यापि विधानचन्द्ररायस्तत् प्रत्याख्यातवान्–'विधानचन्द्रायेण राज्यपालपदं कथं स्वीक्रियते न ग्रहीतुं न बोद्धुं प्रार्थ्यते मया[15]। तृतीयाङ्के पश्चिमवङ्गस्य मुख्यमन्त्रिपदं स्वीकृत्य समस्यासंकुलस्य वङ्गस्य नवनिर्माणाय यतितवान् सः। तदा पश्चिमवङ्गे उद्वास्तुसमस्यायाः समाधानम्[16], परिवहनसंस्थाप्रतिष्ठया साधारणानां कृते जीविकाव्यवस्था[17], भूमिहीनानां निमित्तं भूमिप्रदानम्[18], 'शिक्षाव्यवस्थासंस्कारे विशेषेण संस्कृतस्य सम्मानरक्षणे संस्कृतविद्यालयादिस्थापनम्[19], राज्ये चिकित्साव्यवस्थायामुन्नतिः[20] चेति दक्षप्रशासकत्वेन विधानचन्द्रस्य बहुमुखिन्याः प्रतिभायाः परिचयो लभ्यते नाटकेऽस्मिन्। चतुर्थेऽङ्के मानवानामुन्नतये संस्कृतशिक्षायाः प्रसाराय नवद्वीपे संस्कृतमहाविद्यालयं प्रारब्धवान्। संस्कृतविश्वविद्यालयेन सममन्यविश्वविद्यालयानां स्थापनार्थं प्रायतत सः।

पञ्चमाङ्कस्य प्रथमे दृश्ये श्रीविधानरायस्य वलिष्ठनेतृत्वेन प्रशासकरूपेण च कार्याणि दृष्ट्वा प्रधानमन्त्री जवाहरनेहेरुः सुतरां प्रभावितः सन्तुष्टश्चासीत् 'समस्याजर्जरीभूतो वङ्गदेशोऽद्य... भवता दक्षप्रशासनेन समस्याजर्जरितं राज्यमुन्नतिशिखरे आरोहति। शेषाङ्के करुणरसात्मकमन्तिमं दृश्यं द्वयोर्नागरिकयोः कथोपकथनमुपस्थापितम्, तच्च प्रशंसार्हम्। चान्तिमे भरतवाक्येन नाट्यकृता परमपूज्यं पितरं निकषा प्रार्थितम् –

**प्रपान्तु सर्वान् मनुजांश्च लोकाः साम्येन बोधेन च पूर्णचित्ताः।**
**समग्रविश्वस्य शुभकारिणश्च भवन्तु सर्वेऽत्र विधानदृष्ट्वा॥[21]**

विषयदृशा नाट्यतत्त्वदृष्ट्या च नित्यानन्दस्य नाटकेषु वङ्गकीर्तिविधानं सर्वोत्तमम् इति मे मतिः।

**कालिदासः**– कालिदासस्य प्रसिद्धां किंवदन्तीमुपजीव्य अष्टभिर्दृश्यैर्विभक्त विषयदिशैतिहाधुनिकयोः मेलबन्धनमस्माभिः लक्ष्यते नाट्येऽस्मिन् रूपहावडासंस्कृतसाहित्यसमाजेन 1956 ईशवीयाब्दे प्राकाशिमूर्खकालिदासस्य उदिषु मूर्खत्वपरकं प्राकृतं तथा च कविकालिदासस्य वचःसु बुद्धिदीप्तां संस्कृतभाषां प्रयुङ्क्ते नाट्यकृन्नित्यानन्दो रोचिष्णुतया। प्रसङ्गतः कालिदास-विद्यावत्योः कथोपकथने नाट्यकृता सचेतनतया नाट्यशैली व्यवहृता यथा सहृदयेषु मनोरञ्जकं भवेत्।

**मातृहननम्**– नित्यानन्देन विरचितं पञ्चाङ्केषु विभाजितं विद्रूपात्मकनाटकं तावद्'मातृहननम्' (1987)। अत्र समाजस्य आपातदृष्ट्या हितकारिणा तथा नामसर्वस्वनेतृत्वेनाभिहितानां चरित्रमुन्मोचितं नाट्यकृता। एते नेतारः वैदेशिकपदं प्रति मोहग्रस्ताः–

**जानन्ति नैते न हि किञ्चिदेव विज्ञानशास्त्रन्त्विति हं तथैव।**
**भूगोलबोधो गणिते न बोधः चिकित्सने चैव न कश्चित्॥**[23]

वस्तुतः, मातुर्नाम संस्कृतजनन्याः हननम् इति मातृहननम् इत्यर्थः। अर्थात् निर्मूलनञ्च कृत्वा वास्तविकतया संस्कृतशिक्षाया उन्नतिच्छलेन समूलं संस्कृतस्य लोपो हि तेषां लक्ष्यमिति नाटकस्य मूलमुपजीव्यम्। तथाहि संस्कृतसेवकरूपेण किंकर सक्रोधं प्राह–

**विताड्यते जनन्यद्य स्वपुत्रैर्निजभूमितः।**
**दुःखं लज्जा च घृणा वा किमस्माद् भविता क्षितौ॥**[24]

**जननीश्राद्धवासरम्**– संस्कृतरक्षायै नाट्यकृतोऽत्यादृतो भावः– नाटकस्य मूलं वस्तु। शिक्षाव्यवस्थातः संस्कृतपाठस्य लोपः कृतः संस्कृतविद्वेषिभिः। मातुः मृत्यौ तस्याः सन्तानाः प्रतिवत्सरं सकृत् श्राद्धानुष्ठानं कृत्वा ब्राह्मणभोजन–दक्षिणादानादिकं कुर्वन्तीति पारम्परिकी रीतिः। संस्कृतपण्डितेभ्यः सामान्यवृत्तिप्रदानं नाट्यकृता व्यङ्ग विद्रूरुपात्मकभङ्ग्या ब्राह्मणभोजनदक्षिणादानादिरूपेण उपवर्णितम्। नाटकस्य भरतवाक्ये नाट्यकृतोऽनुनयस्तावत्– संस्कृतरक्षायै सर्व एकीभवन्तु, अन्यथा संस्कृतस्य चिराय विनष्टिरनिवार्येति।

**ध्रुवप्रसादनम्**– पौराणिककथामाश्रित्य सप्ताङ्कविशिष्टं चतुर्दशदृश्यैर्विभक्तं ध्रुवप्रसादनमिति रूपकं नित्यानन्देन व्यलेखि। पौराणिककथानकमुपजीव्य विरच्यापि कथावस्तुनि किञ्चित् परिवर्तनं संसाध्य संस्कृत्य तथा च नूतनाङ्गिकेन शैल्या मूलतो विष्णोः स्तुतिः विहिता। देशसमस्यानां समाधानार्थं नाट्यकारो भगवतः सविधे प्रार्थयन्नाह–

**अन्नाभावाद् जलाभावाद् बहुशश्च विपर्ययात्।**
**क्लिश्यन्ते भारतीयाश्च सर्वता धरणीतले।**
**प्रतीकाराय तस्याद्य नाश्रीयते जगत्प्रभुः।**
**स्वशक्त्यैव प्रतीकार इष्यते मानवैः सदा॥**[25]

नाटकस्यास्य प्रथमाङ्कनाम 'सुनीतिनिर्वासन' मिति, द्वितीयाङ्कस्तावत् 'मृगयानिर्याणम्', तृतीयाङ्कस्य शिरोनाम 'सुनीतिसाक्षादिति, चतुर्थाङ्कः 'पितृदर्शनम्', पञ्चमाङ्कनाम 'तपस्यार्थं ध्रुवनिर्गमनम्', षष्ठाङ्कनाम *नारायणनिर्देशः', चान्तिमाङ्कस्य नाम 'भगवद्दर्शनमिति चेत्यभिधीयन्ते। अन्तिमेऽङ्के ध्रुवस्य कठिनं तपश्चरणं प्रसङ्गतो मनसि समायाति कुमारो पार्वत्यास्तपःसाधनं वर्णयति कवयिता । अन्ततो गत्वा ध्रुवो नारदसकाशान् मन्त्रोपदेशान् प्राप्य भगवद्दर्शनाय प्रस्तौति–

**नवजलधरकान्तिः पद्मनेत्रः स्मितास्य**
**श्रुतिमितकरयुक्तः पीतवासा द्विनेत्रः।**
**अभयवरद एष क्षेमदाता वरेण्यः**
**सकलभुवनभर्ता सौम्यमूर्तिर्दयालुः॥**[26]

अन्तिमे मातुः पितुश्च कलुषं दूरीकृत्य भगवद्दर्शनं प्राप्य राज्यशासनं कृत्वा ध्रुवपदं प्राप ध्रुव इति कृत्वा रूपकमिदं समाप्तिं गतम्। नाट्यस्यास्य नामकरणमन्वर्थसंज्ञकम्।

**विषयकांक्षणम्**– साम्प्रतिकसमस्याधारितं कथानकमाश्रित्य नाट्यकर्तुः नित्यानन्दस्य पञ्चाङ्कसमन्वितं दशदृश्यान्वितञ्च रूपकं तावत् 'विषयकांक्षणम्'। नाटकस्य वस्तु एवम्– गवेशो नाम कञ्चन स्वार्थान्वेषी जनः पल्लीमगलसमितेः सभापतिहरेन्द्रं कपटाचारेण सन्तुष्य समितेः सर्वं धनसम्पत्त्यादिकम् अपहर्तुमिष्टवान्। किन्तु गवेशस्य प्रवञ्चनां ज्ञात्वा सर्वे सरलाः ग्रामवास्तव्याः समितिं त्यक्तवन्तः, गवेशस्तदा विचारालयस्य साहाय्येन अवशिष्टान् जनान् विताडयितुं तथा च सर्वमर्थजातमात्मीकृत्य सानन्दं स्थातुमिच्छति। कूटबुद्ध्या अर्थव्ययाच्च नायकः सर्वमात्मसात्कृतवान्–

**अन्याय न्यायमेवेह वर्तते ननु सम्प्रति।**
**अर्थो यस्यास्ति पर्याप्तो न्यायवान् पुरुषः स हि॥**[27]

**देशबन्धुप्रकीर्तनम्**– नित्यानन्देन विरचितमपरमेकं रूपकं तावत् 'देशबन्धुप्रकीर्तन' मिति। नाटकस्यास्याङ्कान्तर्गतेषु दृश्येषु विधृतमासीद् देशबन्धोश्चित्तरञ्जनदासस्य व्यक्तिगतजीवनस्य गुरुत्वपूर्णं पर्व। स्वाधीनतासंग्रामे भारतीयानां प्रत्यहम् आत्मबलिदानं दर्शं नित्यानन्दोऽपि दुःखेन रोरुद्यते। तस्मात् तस्य लेखनीतो निर्गच्छन्ति 'देशबन्धुप्रकीर्तना' दिवद् ऐतिहासिकनाटकानि।

**सुभाषविजयम्**– सुभाषचन्द्रस्य संग्राममयजीवनमाधारीकृत्य नित्यानन्देन सुभाषचन्द्रस्य वीरगाथा समभिद्योतिता। सुभाषचन्द्रो न केवलं पश्चिमवङ्गस्य, परं कृत्स्नस्य भारतवर्षस्य स्वाधीनताप्राप्त्यै जनप्रियं तथा गुरुत्वपूर्णं चरित्रं वरीवर्ति। तस्य छात्रराजनैतिकयोर्जीवनयोः तात्पर्यवहानां वृत्तान्तानां नाट्यरूपमात्रमेतत् प्रसङ्गतः उल्लेख्यं यत् स्वाधीनतासंग्रामः, कारावरणम्, मणिपुरे आजाह-हिन्द फौजसंपटनमाध्यमेन युद्धयात्रा चेत्यादिविषयाः नाट्योचितभङ्ग्या रोचिष्णुतया च नित्यानन्देनोपवर्णिताः। 1986 ईशवीयाब्दे नाटकस्यास्य रचना जाता। श्रीहट्टस्य सुशीलचन्द्रसेनस्य देशाय आत्मत्यागो हि 'सुशीलविजय' मिति रूपकस्य विषयमूलम्।

**बालेश्वरमहायुद्धम्**– बालासोरनामके स्थाने वुड़िवालामनद्यास्तीरे यतीन्द्रनाथमुखोपाध्यायेन समं टिम्राटस्य संघर्षकाहिनी हि मूलमुपजीव्यमस्य नाटकस्य। 1988 ईशवीयाब्दे नित्यानन्देन नाटकमिदम् ऐतिहासिकं विरचितम्।

**आत्मनिवेदनम्**– स्वाधीनतासंग्रामे दत्तचित्तः प्रफुल्लचाकी आङ्गलसर्वकारेण धृत इति कृत्वा स स्वयमेव आत्महननं चकार इति सत्यमैतिहासिकं वृत्तमाधरीकृत्य नित्यानन्देन रचितमिदं रूपकम्।

**देशशत्रुनिपातनम्**– विप्लविनः यदा अवगतवन्तो यत् विश्वासघातको नरेनगौँसाइ भारतीयानां गुप्ततथ्यादिकम् आङ्गलेभ्यः प्रयच्छति स्म, तदा कानाइलाल-सत्येनौ द्वौ विप्लविनौ तं जघ्नतुः। परवर्तिकाले कानाइलालस्य मृत्युदण्डोऽभूदिति भारतीयानां निःस्वार्थपरवृत्तान्तमाधारीकृत्य नित्यानन्देन ग्रथितं 'देशशत्रुनिपातन'मिति। देशशत्रोः नरेनस्य निपातनमिति केन्द्रीयवस्तु नाटकस्यास्य।

**आनन्दमठम्**– नित्यानन्देन प्रायेण षोडश नाटकान्यनूदितानि। तेषु अन्यतमं तावत् साहित्यसम्राजो वङ्किमचन्द्रचट्टोपाध्यायस्य देशभक्तिपूर्णस्योपन्यासस्य आनन्दमठस्य विषयमुपजीव्य षडङ्केषु द्वादशदृश्येषु च विभक्तम् 'आनन्दमठ' मिति। नान्दीश्लोके नाट्यकृता देशमातृकां प्रति तदीया विनम्रा भक्तिर्विनिवेदिता

**या जन्मभूमिर्नियतं प्रपात्री तदाश्रितानां हि नृणां प्रपूज्या।**
**सदाश्रया सा सततं प्रयायात् खाद्यान्नतोयैः वसनैः क्षितौ वः॥**[28]

सत्यानन्दभवानन्दजीवानन्दशान्ति-कल्याणी-महेन्द्राणां चरित्रेषु नाट्यकृन्मूलानुसारं त्याग-प्रेम-सेवादिगुणान् आरोपितवान्। अनुवादरूपमिदं नाटकं पाठं पाठं मनसि एतदेव मन्यते यन्मूलस्य सर्वे भावाः नाट्यकृता नात्र समाहिताः, परं देशप्रेम्णचित्रणे नाट्यमिदं मूलानुसारि इति वक्तुमलम्।

अस्मिन् रूपके नित्यानन्दस्य देशभक्तिः सुतरामेव अभिव्यक्तेति दृश्यते। तस्मात् मातृमुक्तेः चित्रमत्राङ्कितम्। नाट्यकारश्चान्तिमे आङ्गलशासनान्मुक्तिं प्रार्थयते-

**हताश्च यवना दुष्टाः एकं कार्यं प्रसाधितम्।**
**एकञ्च शृङ्खलं मुक्तं जनन्याः करपादयोः॥**
**द्वितीयं शृङ्खलं मुक्तं कदा मातुर्भविष्यति।**
**म्लेच्छानां कबलान्मुक्तिर्जननण्या मे कदा भवेत्॥**[29]

**रहमतखानवृत्तान्तम्**– रवीन्द्रनाथस्य 'काबुलिबाला' इति कथानकमुपजीव्य विरचितं पञ्चाङ्केषु प्रविभक्तमनुवादात्मकं नाटकमिदम्। लघुवाक्यैः कोमलभावोद्दीपकैश्च संवादैः रहमतखानस्य वात्सल्यम् अमलेशस्य

महत्त्वञ्च नित्यानन्देनानवद्यभङ्ग्या निरूपिते। इह नाटके नाट्यकृता केवलं दश श्लोका: संवलिता:। अनुवादेऽस्मिन् नाट्यकृतो भाषाशैली अनवद्या सरला सुखबोध्या चेति। मूलस्रष्टु: भावान् सर्वान् समाहर्तुं न शक्नोति नित्यानन्द:, परं मूलकवे: मूला भावसम्पत्ति: रक्षितात्रा।

**गुप्तधनम्**– नित्यानन्देन रवीन्द्रकथा: अनूद्य दश नाटकानि प्रकाशितानि। नाटकस्य नायको मृत्युञ्जयो यदा स्वकीयं लोभातिशयं नियन्त्रयति, तदा स चिन्तामुक्तो भवति। नाटकमिदमनुवादमूलकम्। नाट्यतत्त्वानुसारि भरतवाक्यमत्र लसितम्।

**सम्पत्तिसमर्पणम्**– रवीन्द्रकथाया नाट्यरूपं 'सम्पत्तिसमर्पणम्' इति ह्येतदेकाङ्करूपकम् एकादशदृश्यैर्विभाजितम्। विदूषक-सूत्रधारयो: कथोपकथनमत्र उपन्यस्तम्। तदुक्तं नाट्यकृता– **कृता रवीन्द्रनाथेन या सम्पत्तिसमर्पणम्... आम्, ज्ञातम् एष कुसीदजीवी धनसञ्चयमात्रतत्पर:**[30]**।** करुणरसात्मके रूपके नायकस्य यज्ञेश्वरस्य स्वसम्पत्तिरक्षायै कृपणचरित्रं नाट्यकृता सम्यक् चित्रितम्। नाटकस्य भरतवाक्यं तावत्–

**नानादु:खसमकीर्णा स्वार्थपरतयान्विता।**
**कृपणत्वादिदोषेण मुक्ता भूमि: भवत्यसौ।।**[31] इति।

## अन्त्यटीका:

1. वि.स.ना. (रामजी), पृ.-57
2. नाटकमिदं 1972 ईशवीयाब्दे प्रकाशितमभवत्।
3. आ.सं.सा.रू.पृ.- 109
4. वाल्मीकित्वलाभम् - श्लोक:-11
5. श्रीवाल्मीकित्वलाभम् (श्लोक:- 67)।
6. महिषासुरलाञ्छनम्, हाओडासंस्कृतसाहित्यसमाजम, 1982 त्रैव (1011) 7
7. श्रीवाल्मीकित्वलाभम् 10।1
8. महिषासुरलाञ्छनम्, पृ. 341
9. महिषासुरलाञ्छनम् 2।34
10. महिषासुरलाञ्छनम्, पृ. 145
11. अमरवीरवृत्तान्तम् (द्वितीयाङ्क:, प्रथमदृश्यम्, श्लोक: - 25)
12. अमरवीरवृत्तान्तम् (द्वितीयाङ्क:, प्रथमदृश्यम्, श्लोक:-29-30)
13. वङ्गकीर्तिविधानम् (जाह्नवी, 1987, सप्तदशवर्ष:)।
14. वङ्गकीर्तिविधानम् (जाह्नवी, 1987, सप्तदशवर्ष:), (श्लोक 1, पृ. 46)
15. वङ्गकीर्तिविधानम् (जाह्नवी, 1987, सप्तदशवर्ष:), (द्वितीयाङ्क:, पृ. 18)।
16. वासेन हीना: गतजीविकाश्च (वङ्गकीर्तिविधानम्, तृतीयाङ्क:, पृ. 23)
17. परिवहनव्यवस्थां परिगृह्य राष्ट्रियपरिवहनव्यवस्थां संस्थाप्य तत्रैव जीविकाव्यवस्था करोति एतेषाम्' (तृतीयाङ्क:, पृ. 23)
18. दरिद्रा मनुजा यथा प्राप्नुयु: भूमिमत्रैव तथा प्रयतते यदा। (तृतीयाङ्क:, पृ. 24)।
19. नवद्वीपादौ राष्ट्रियसंस्कृतमहाविद्यालयस्थापनव्यवस्थापि मया कृता, पश्चिमवगे कश्चित् संस्कृतविश्वविद्यालयोऽवश्यं स्थापनीय:।
20. सेवाबुद्ध्या करोत्येष चिकित्सां नियमेन हि (तृतीयाङ्क:)।
21. भरतवाक्यम् (98, पृ. - 65 )
22. हावडा-संस्कृत-साहित्य-समाजेन प्रकाशितम् 1956 ईशवीयाब्दे।
23. आधुनिक संस्कृत साहित्य (1910-2010), पृ. - 157।
24. आधुनिक संस्कृत साहित्य (1910-2010), पृ. - 157।
25. ध्रुवप्रसादनम्
26. ध्रुवप्रसादनम् (7।112)
27. ध्रुवप्रसादनम्, पृ.102
28. आनन्दमठम् (नान्दीश्लोक:), पृ. 66
29. आनन्दमठम् (श्लोक:-87-88), पृ. 89
30. सम्पत्तिसमर्पणम्, पृ. 2-3
31. सम्पत्तिसमर्पणम्, पृ. 26

ISSN 2582-2608

## ग्रन्थसूची

* उपाध्यायः, रामजी; विंशशताब्दीकं संस्कृतनाटकम्; चौखाम्बा विद्याभवन, वाराणसी, 2005।

* उपाध्यायः, रामजी ;आधुनिक संस्कृत नाटक (द्वितीयखण्डः), सागरविश्वविद्यालयः, सागरः ।

* चट्टोपाध्याय, ऋता ; आधुनिक संस्कृत काव्य ‒ वाङाली मनीषा शतवर्षेर आलोके, संस्कृतपुस्तकभाण्डार, 2018 (प्रथमप्रकाशः)।

* चट्टोपाध्याय, ऋता ; आधुनिक संस्कृत साहित्य (1910– 2010) छोटगल्प ओ नाटक, प्रग्रेसिभ पाब्लिशार्स, कोलकाता, 2012।

* चौबे, व्रजबिहारी ; संस्कृत वाङ्मय का वृहद् इतिहास (प्रथमवेदखण्ड), उत्तरप्रदेशसंस्कृतसंस्थानः, लखनऊ ।

* त्रिपाठी, राधावल्लभ ; संस्कृत वाङ्मय का वृहद् इतिहास (चतुर्थखण्ड), उत्तरप्रदेशसंस्कृतसंस्थानः, लखनऊ।

* त्रिपाठी, राधावल्लभ ;संस्कृतसाहित्य ‒ बीसवीं शताब्दी, राष्ट्रिय संस्कृत संस्थान, दिल्ली, 1999 ।

* दास, देवकुमार ; संस्कृत साहित्येर इतिहास, सदेश, कोलकाता, 1419 (एकादश संस्करणम्)।

* पण्डा, गङ्गाधरः ; संस्कृत वाङ्मय का वृहद् इतिहास (त्रयोदशखण्ड), उत्तरप्रदेशसंस्कृतसंस्थानः, लखनऊ, 2006 (प्रथमसंस्करणम्)।

* पाठक, जगन्नाथ ; संस्कृत वाङ्मय का वृहद् इतिहास (सप्तमखण्ड), उत्तरप्रदेशसंस्कृतसंस्थानः, लखनऊ, 2000 (प्रथमसंस्करणम्)।

* मिश्र, नन्ददुलाल ; विंश शताब्दीते वाङ्गालीर संस्कृत नाट्य साधना, राणाघाट, 1997।

* राय, शिप्रा ;आधुनिक संस्कृतसाहित्येर संक्षिप्त इतिवृत्त, संस्कृतवुकडिपो, कलिकाता ।

* वन्द्योपाध्याय, सुरेशचन्द्र ; संस्कृत साहित्ये वाङ्गालीर दान, संस्कृतपुस्तकभाण्डार, कलिकाता, 1963।

* वरोला, वाचस्पति; संस्कृतसाहित्य का इतिहास, चौखाम्बा संस्कृत सीरिज आफिस, वाराणसी, 1975 (द्वितीयसंस्करणम्)।

* व्यास, भोलाशंकर ; संस्कृत वाङ्मय का वृहद् इतिहास (तृतीयखण्ड), उत्तरप्रदेशसंस्कृतसंस्थानः, लखनऊ, 2000 (प्रथमसंस्करणम्)।

* शास्त्री, मङ्गलदेव ;संस्कृत साहित्य का इतिहास, मोतीलाल बनारसीदास, दिल्ली, 2016 (सप्तमर्मुद्रणम्)।

* सेन, शुभ्रजित्; भारतवर्षे आधुनिकसंस्कृतसाहित्यम्-विहङ्गमदृष्ट्या परिशीलनम्, कोलकाता, संस्कृतपुस्तकभाण्डार, 2019 (प्रथमप्रकाशः)।

*शोधछात्रः,*

*केन्द्रीयसंस्कृतविश्वविद्यालयः एकलव्यपरिसरः, अगर्तला, त्रिपुरा।*

ISSN 2582-2608

# परमलघुमञ्जूषादिशा निपातार्थविचारः

श्री अनिमेषमण्डलः

***शोधसारः-***

*निपातार्थविचारे श्रीनागेशभट्टेनात्यन्ताभावस्य विशेष्यतया तिङर्थक्रियायामन्वयः, एवार्थविचारः अतीवगम्भीरतया विस्तरेण च चर्चितम्। अत्र तु केवलं दिङ्मात्रं दर्शितम्, अधिकज्ञानाय तत्रैव परमलघुमञ्जूषायां वैयाकरणसिद्धान्तलघुमञ्जूषादिग्रन्थेषु द्रष्टव्यमिति।*

**कूटशब्दाः**- स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्, क्रियाविशेषाक्षेपकत्वम् सम्बन्धपरिच्छेदकत्वम्, सकर्मकत्वविचारः, द्योतकत्वविचारः, निपातानामर्थवत्त्वम्॥

संस्कृतवाङ्मये व्याकरणस्य माहात्म्यं सर्वैः ज्ञायत एव। तत्र व्याकरणेषु पाणिनीयव्याकरणं सर्वप्रसिद्धम्। तत्र च वैयाकरणप्रवरेषु नागेशभट्टादयः सुप्रसिद्धा एव। पाणिनीयव्याकरणमाश्रित्यैवाचार्येण नागेशभट्टेन सारल्येन सिद्धान्तानां प्रतिपादनार्थं परमलघुमञ्जूषा विरचिता। नागेशभट्टविरचितायां परमलघुमञ्जूषायां नागेशेन धात्वर्थनिरूपणानन्तरं निपातार्थनिरूपणं कृतमस्ति। वैयाकरणानां नये धातव एव वाचका निपाताश्च द्योतका भवन्ति। नैयायिका उपसर्गाणानां द्योतकत्वं निपातानां वाचकत्वं प्रतिपादयन्ति। तन्मतं निरासयितुमुपसर्गाणां निपातानाञ्च सर्वेषां द्योतकत्वसमर्थनाय प्रकरणमिदमारभ्यते।

महामहोपाध्यायनागेशेन वैयाकरणानां नैयायिकानां वैमत्यन्दृष्ट्वेयं परमलघुमञ्जूषा विरचिता। नैयायिकानामुपसर्गाणां द्योतकत्वं निपातानां वाचकत्वमिति मतन्दूषयित्वोपसर्गाणां निपातानाञ्च सर्वेषां द्योतकत्वं सम्पादयत्याचार्यो नागेशभट्टः। तदवसरे सकर्मकत्वस्य लक्षणं क्रियते कर्मसंज्ञकार्थान्वय्यर्थकत्वमिति। द्योतकत्वस्य त्रीणि लक्षणानि कृतानि—

1. स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वमिति
2. क्रियाविशेषाक्षेपकत्वमिति
3. सम्बन्धपरिच्छेदकत्वमिति।

अपि च नैयायिकमते विशिष्टस्य धातुत्वं कथं नेति प्रश्ने विशिष्टस्य पाणिनिना धातुपाठे अनुपदेशादुपसर्गाच्च अडाद्यापत्तिरिति समाधानमुक्तम्। नैयायिकानां मते उपसर्गाणां स्वतन्त्रतया कुत्राप्यर्थो नैवोल्लिखितः, परन्तु उपसर्गभिन्ननिपातानां स्वतन्त्रतयाऽर्थः कोशे दरीदृश्यते। यथा प्रत्यक्षे तुल्ये चार्थे साक्षाच्छब्दस्य प्रयोगो भवति साक्षात्प्रत्यक्षतुल्ययोरिति कोशात्। एवं नमः पदेन 'देवाय नमः' इत्यादौ नमस्कारार्थस्य दानावसरे गवे नमः इत्यत्र पूजार्थस्य प्रसिद्धत्वात्। तेनोपसर्गाणान्द्योतकत्वन्तदितरनिपातानाञ्च वाचकत्वं स्वीक्रियते नैयायिकैः। एतदर्थं सकर्मकत्वलक्षणं स्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वमिति स्वीक्रियते। परन्तु नागेशेनोपसर्गाणां निपातानाञ्च सर्वेषान्द्योतकत्वं प्रतिपाद्य धात्वर्थव्यापारप्रयोज्यफलाश्रयस्यैव कर्मत्वमिति प्रतिपादितम्। निपातानां वाचकत्वे सति शोभनः समुच्चय इत्यर्थे शोभनश्चेति घटस्य समुच्चय इत्यर्थे घटस्य चेत्यापत्तिस्स्यादिति भूषणसारकारस्य मतमपि नागेशेन खण्डितम्। निपातानामर्थवत्त्वं द्योतकत्वमादायेति तत्रैव प्रतिपादितम्। अपि च इवार्थविषये नैयायिकमतं खण्डयित्वा इवशब्दस्योपमानताद्योतकत्वमिति।

उपमानत्वञ्चोपमानोपमेयोभयनिष्ठसाधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वमिति प्रतिपादितम्। एवं नञर्थ इत्यादिविषये परमलघुमञ्जुषायां बहु विस्तरेण प्रतिपादितन्तदेवात्र साररूपेण प्रस्तुतमिति। एतदेव विस्तरेण अधः प्रतिपाद्यते.......

अनुभूयते सुखम्, साक्षात्क्रियते गुरुरित्यादावनुभवप्रकृष्टजपसाक्षात्काराद्यर्थनिरूपिता शक्तिराख्यातार्थान्वयानापत्ते-रुपसर्गेऽभावात्, भवतीत्यादावप्यनुभवाद्यर्थस्य प्रतीत्यापत्तेरुपसर्गरहिते केवलधातावभावात्, विशिष्टानुपूर्व्या शक्ततावच्छेदकत्वे विनिगमनाविरहाभावात्समुदायेऽप्यभावादनुभवादितत्तदर्थनिरूपिता शक्तिर्धातावेवोपसर्गनिपातौ च द्योतकाविति। साक्षात्क्रियते गुरुरित्यत्र धातोः प्रत्यक्षज्ञानरूपार्थप्रतीत्या गुरोः धात्वर्थनिरूपितफलाश्रयत्वात्कर्मत्व-सम्भवे धातोः सकर्मकत्वम्।

ISSN 2582-2608

**सकर्मकत्वविचारः**- कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमिति ग्रन्थकारस्य मतम्। अर्थात्साक्षात्क्रियते गुरुरित्यत्र कर्मसंज्ञकत्वं गुरोरस्ति तदर्थान्वय्यर्थकत्वं धातोस्सत्वात्सकर्मकत्वमिति।

**द्योतकत्वविचारः**- द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वमिति। स्वं द्योतकत्वेनाभिमतमुपसर्गनिपातवाचकं पदम्, तन्निष्ठा वृत्तिरनुभवाद्यर्थनिरूपिता वृत्तिस्तस्या उद्बोधकत्वं द्योतकत्वमिति। एवञ्च भूधातुगतानुभवशक्तेरुद्बोधकोऽनुरित्युपसर्गः।

क्वचिच्च क्रियाविशेषाक्षेपकत्वं द्योतकत्वमिति। यथा प्रादेशं विलिखतीत्यत्र प्रादेशस्य लेखनकर्मकत्वासम्भवेन कर्मकारकविभक्तेः लेखतीत्यनेन योगाभावात् वि इत्युपसर्गेण मानक्रियाऽऽक्षिप्यते। तेन प्रादेशं विमाय लिखतीत्यर्थावगमः। अत एव अथ शब्दानुशासनमित्यत्रानेकक्रियाविषयस्यापि शब्दानुशासनस्य प्रारभ्यमाणताऽथशब्दसन्निधानेन गम्यते।

क्वचित्तु सम्बन्धपरिच्छेकत्वन्द्योतकत्वमिति। यथा- कर्मप्रवचनीयास्सम्बन्धविशेषपरिच्छेदकत्वं द्योतकत्वमिति। सूत्रभाष्ये स्पष्टं यत्कर्म अर्थात्क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः। ये सम्प्रति क्रियां नाहुः येऽप्रयुज्यमानस्य क्रियामाहुस्ते कर्मप्रवचनीया इति कर्मप्रवचनीयस्यान्वर्थकत्वमुक्तम्।

**विशिष्टस्य धातुत्वं कथं नेति विचारः**- ननूपसर्गसहितस्य कथं धातुसंज्ञकत्वमिति प्रश्ने उच्यते धातुगणे विशुद्धानां केवलधातूनामेव पाणिनिना पाठः कृतोऽस्ति। तेन शुद्धानां धातूनामेव धातुसंज्ञकत्वमिति। अन्यं दोषमाह- उपसर्गविशिष्टस्य धातुत्वस्वीकारे उपसर्गविशिष्टादेव लडादेर्विधानेन विशिष्टस्यैवाङ्गसंज्ञायां लुङ्लङ्लृक्ष्वडुदात्तः इत्यनेनोपसर्गादेवाडाद्यापत्तिः। अतः केवलस्यैव धातुत्वमिति।

**नैयायिकमतविमर्शः**- नैयायिकमते उपसर्गाणां स्वतन्त्रतया कुत्राप्यर्थो नैवोल्लिखितः, परन्तूपसर्गभिन्ननिपातानां स्वतन्त्रतया अर्थः कोशे दरीदृश्यते। यथा प्रत्यक्षे तुल्ये चार्थे साक्षाच्छब्दस्य प्रयोगो भवति साक्षात्प्रत्यक्षतुल्ययोः इति कोशात्।

एवं नमः पदेन 'देवाय नमः' इत्यादौ नमस्कारार्थस्य दानावसरे 'गवे नमः' इत्यत्र पूजार्थस्य प्रसिद्धत्वात्। तेनोपसर्गाणान्द्योतकत्वन्तदितरनिपातानां च वाचकत्वं स्वीक्रियते नैयायिकैः।

ननु निपातानां वाचकत्वे साक्षात्क्रियते गुरुरित्यत्र कर्मणि लकारानापत्तिः। एवञ्च कृधातोस्सकर्मकत्वेऽपि साक्षात्कारार्थे सकर्मकत्वाभावात्, स्वार्थफलव्यधिकरणव्यापारस्यैव सकर्मकत्वात्साक्षात्कारार्थस्य च धात्वर्थफलत्वाभावात्सकर्मकत्वं न स्यादिति। अतो नैयायिकमते सकर्मकत्वलक्षणं स्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वमिति। तत्र स्वं धातुः स्वसमभिव्याहृतः धातुसमभिव्याहृतः निपातः धातुसमभिव्याहृतनिपातस्य अर्थो यत्फलं तादृशफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति। एवं प्रकृते कृधातुसमभिव्याहृतनिपातसाक्षात्तस्य अर्थो यत्फलं साक्षात्काररूपस्तादृशफलव्यधिकरणव्यापारवाचकत्वस्य सकर्मकत्वान्न कृधातोः सकर्मकत्वहानिः।

ननु धात्वर्थफलाश्रयत्वस्यैव कर्मत्वाद्गुरोः न कर्मत्वं स्यादिति। तदोच्यते कर्मत्वं स्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वमिति। अर्थात्स्वं धातुः स्वसमभिव्याहृतनिपातस्तस्य योऽर्थस्साक्षात्काररूपस्तत्फलशालित्वाद्गुरोः कर्मत्वं सम्भवति।

**नैयायिकमतखण्डनम्**-

**नागेशेनोच्यते यद्**- उपर्युक्तनैयायिकमतं समीचीनं नास्ति। यतो ह्युपसर्गनिपातयोर्मध्ये वैषम्ये बीजाभावादनुभूयते इत्यनेन साक्षात्क्रियते इति समत्वात्। तथा च नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्नः इति (व्युत्पत्तिवादे भेदान्वये) व्युत्पत्त्या साक्षात्काररूपनिपातार्थफलस्य व्यापाररूपकृञ्धात्वर्थेऽनुकूलत्वरूपभेदसम्बन्धेनाऽन्वयो भवितुं नार्हति, प्रत्ययार्थान्तरा कृत्यैवान्वयो भवतीति नियमास्वीकारे तण्डुलं पचतीत्यर्थे तण्डुलः पचतीत्यस्यापि कर्मत्वेन प्रयोगापत्तिस्स्यात्। किञ्च नैयायिकोक्तकर्मत्वलक्षणमपि समीचीनं नास्ति धात्वर्थव्यापारप्रयोज्यफलाश्रयस्यैव कर्मत्वम्। तेन साक्षात्काररूपोऽर्थो निपातस्यास्ति धातोर्नास्तीति न कर्मत्वमिति। धात्वर्थव्यापारप्रयोज्यफलाश्रयस्य कर्मत्वास्वीकारे

प्रयागात्काशीं गच्छतीत्यत्राप्युत्तरदेशसंयोगानुकूलव्यापारप्रयोज्यविभागरूपफलाश्रयत्वात्प्रयागस्यापि कर्मत्वं स्यात्। अतः धात्वर्थव्यापारप्रयोज्यफलाश्रयस्यैव कर्मत्वमिति स्वीकर्तव्यम्।

**भूषणसारकारमतविचारः**– निपातानां वाचकत्वे सति शोभनः समुच्चयः इत्यर्थे शोभनः च इति घटस्य समुच्चयः इत्यर्थे घटस्य च इत्यापत्तिस्स्यात्।

**भूषणसारकारमतखण्डनम्**– भूषणकारोक्तमतं न समीचीनं वर्तते। यतो हि शब्दशक्तिस्वभावाः निपातास्तस्यार्थस्सर्वदाऽन्यं प्रति विशेषणतया प्रतीयते न तु विशेष्यतया। अतश्चार्थे शोभनस्य कदापि विशेषणतयाऽन्वयो न वा घटस्य।

किञ्च घटं पटं च पश्य इत्यादौ घटस्य पटस्य द्वयोरपि क्रियायामेवाऽन्वयः। तेन कारकत्वाद्द्वितीया। ततः समुच्चयवान् इत्यनेन साकमेतेषामन्वयः। तत्र सन्निहितत्वात्प्रतियोग्याकाङ्क्षायां घटस्यान्वयः। परन्तु द्वितीयाविभक्तिः पूर्वतः एवात्र तिष्ठतीति कारणात् षष्ठी विभक्तिर्न भवति। समुच्चयस्य चानुयोगितानिरूपकत्वसम्बन्धेन पटेऽन्वयः। ननु द्वयोः प्रातिपदिकार्थयोरभेदान्वयबोधो भवति। अत्र च चकाररूपनामार्थस्य कथमनुयोगिनिरूपकत्वरूपभेदसम्बन्धेनान्वयः इति चेन्निपातातिरिक्तप्रातिपदिकार्थयोः साक्षाद्भेदेनान्वयः इत्युक्तत्वान्न दोषः।

**निपातानामर्थवत्त्वं द्योतकत्वमादाय विचारः**–

शक्तिलक्षणाद्योतकताऽन्यतमसम्बन्धेन बोधकत्वस्यैवार्थवत्त्वम्। निपातानामर्थवत्त्वं द्योतकत्वमादायैव भवति। यथा नञ्समासे अब्राह्मणः इत्यादावारोपितब्राह्मणत्ववान् इत्यर्थे उत्तरपदप्राधान्यं द्योत्यार्थापेक्षयैव। प्रतिष्ठते इत्यत्र स्थाधातोरेव धातूनामनेकार्थत्वाद्गमनवाचकत्वम्। प्रेत्युपसर्गस्तु धात्वर्थगमनस्य द्योतकः। तेन प्रतिष्ठते इत्यस्य गन्तुं प्रवर्तते इत्यर्थः। अत एव धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति सिद्धान्तमिति। अत्र साधनं कारकं तेन धातुरादौ कारकप्रयुक्तकार्येण सह युज्यते। तत उपसर्गसंज्ञकेन शब्देन सह युज्यते। यतो हि साधनं क्रियां निर्वर्तयत्यर्थात्साध्य-त्ववैशिष्ट्येन बोधयति इति। ततस्साध्यत्ववैशिष्ट्येन ज्ञातां क्रियामुपसर्गो विशिनष्टीति। अत एव हरिकारियामुच्यते–

**धातोस्साधनयोगस्य भाविनः प्रक्रमाद्यथा।**
**धातुत्वं कर्मभावश्च तथाऽन्यदपि दृश्यताम्॥**
**बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते[1]**॥ इति।

अस्यायमाशयो यथा भाविकारकप्रयुक्तलडादिसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातुसंज्ञा उच्यते यथा च सन्प्रत्यये चिकीर्षते भावीषिकर्मत्वमुच्यते तथा भाव्युपसर्गसम्बन्धप्रक्रमादर्थादाश्रयणादेव विशिष्टक्रियावाचकत्वन्दृश्यते। धातूपसर्गयोः सम्बन्धं बुद्धिविषयीकृत्योपसर्गार्थकृतो विशेषो धातुना एवाऽऽभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते। अर्थादुपसर्गप्रयोगात्प्रागेव धातुनैवोपसर्गार्थविशिष्टस्स्वार्थ उच्यते इति तात्पर्यं पूर्वं धातुरुपसर्गेणेति तु तदर्थस्य धात्वर्थान्तर्भावाद्व्यवहारः।

**इवपदार्थविचारः**– इदानीं निपातानां द्योतकत्वं संसाध्य निपातविशेषार्थस्य निरूपणङ्क्रियते। चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरेव लक्षणा नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिरिति न्यायात् नञ्युक्तमिवयुक्तञ्च पदं स्वबोध्यार्थाद्भिन्नस्य स्वबोध्यार्थेन सदृशस्य च द्योतकं भवति। तेन इवपदं तात्पर्यग्राहकमिति। तात्पर्यग्राहकत्वञ्च स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्वमिति। अर्थात्स्वसमभिव्याहृपदस्यान्यार्थे शक्तिकल्पनमिति। एवमिवेति निपातस्यान्यार्थे शक्तिकल्पनाद्द्योतकत्वमागतम्।

**नैयायिकमतखण्डनम्**– नैयायिकानां मते इवार्थः सादृश्यम्। तत्र चन्द्रस्य स्वप्रतियोगित्वसम्बन्धेनेवार्थसादृश्ये तस्य च स्वानुयोगित्वसम्बन्धेन मुखेऽन्वयः। तेन चन्द्रप्रतियोगिकसादृश्यानुयोगि मुखमिति बोधः। एवं भेदसम्बन्धेन एव सिद्धे लक्षणा किमर्थमिति प्रश्ने नागेशेनोच्यते चन्द्र इव दृश्यते इत्यत्र चन्द्र इव मुखं पश्यामीत्यत्र चन्द्रपदस्य

मुखरूपकर्मसामानाधिकरण्याभावाच्चन्द्रप्रतियोगिकसादृश्यानुयोगि मुखमिति बोधो न स्यात् प्रतियोगिवाचकपदाच्च षष्ठ्यापत्तिः।

**इवार्थविषये नागेशमतविचारः**- नागेशस्य मते इवशब्दस्योपमानताद्योतकत्वम्। उपमानत्वञ्चोपमा-नोपमेयोभयनिष्ठसाधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वमिति। अर्थादुपमाने उपमेये चोभयत्रनिष्ठो यः साधारणधर्मस्तद्वत्त्वेन ईषदितरपरिच्छेदकत्वम्। तद्धर्मवत्तया परिच्छेदकत्वमुपमेयत्वम्। एवमुपमानोपमेयोभयवृत्तिसाधारणधर्मवत्त्व-विशिष्टस्वल्पभेदवदितरपरिच्छेकत्वमुपमानत्वमिति फलितम्। एवञ्च साधारणधर्मसम्बन्धश्च क्वचिद्विशेष्यतया क्वचिच्च विशेषणतया भासते। तेन चन्द्र इवाह्लादकं मुखमित्यत्र साधारणधर्मस्याऽऽह्लादकस्य विशेषणतयाऽन्वये आह्लादको-पमानभूतचन्द्राभिन्नमाह्लादकं मुखमिति बोधः।

चन्द्र इव मुखमाह्लदयतीत्यादौ च साधारणधर्मस्याह्लादकस्य विशेष्यतयाऽन्वये उपमानभूतचन्द्रकर्तृकाह्लादाभिन्नो मुखकर्तृकाह्लाद इति बोधः इदमुपमानानि सामान्यवचनैः इति सूत्रभाष्ये सम्यग्तयाऽऽलोचितमस्ति।

**नञर्थविचारः**-

**द्वौ नञौ समनुरूपाख्यातौ पर्युदासप्रसज्यकौ।**
**पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्॥**
**प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता।**
**पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥**
**अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।**
**प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्**[2] ॥ इति।

अत्र ज्ञायते नञ् द्विविधः पर्युदासः प्रसज्यप्रतिषेधः तत्रारोपितविषयत्वं नञ्पर्युदासद्योत्यम्। आरोपितविषयद्योतकत्वञ्च नञः समभिव्याहारघटादिपदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकत्वम्। यथा अब्राह्मणः इत्यादौ पर्युदासे ब्राह्मणपदमारोपितब्राह्मणत्ववान् इत्यस्य बोधको नञ् तात्पर्यग्राहकं भवति। प्रवृत्तेर्निमित्तं घटत्वब्राह्मणत्वादयः प्रवृत्तिनिमित्तं वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वमिति। एवं नञ्समभिव्याहारपद-मारोपितप्रवृत्तिनिमित्तबोधकं भवत्यत्र नञ्पदं तात्पर्यग्राहकं भवति। तेन अब्राह्मण इत्यत्र नञ्समभिव्याहारपदं ब्राह्मणपदमारोपितब्राह्मणत्ववान् इति क्षत्रियादेः बोधः।

पर्युदासस्तु स्वसमभिव्याहृतपदेन सामर्थ्यात्समस्ते एव। क्वचित्तु यजतिषु येयजामहं करोति नानुयाजेषु इत्यादावत्र मन्त्रे यजतिशब्दः यागसामान्यवाची अनुयाजशब्दश्च यागविशेषवाची येयजामहशब्दः तद्घटितमन्त्रवाचकः करोतिश्चोच्चारणार्थको नञर्थः आरोपितत्वम्, तेन आरोपितानुयाजत्वविशिष्टेषु यागेषु येयजाहमशब्दघटितं मन्त्रमुच्चारय इति बोधो घटोऽपटो भवतीत्यर्थे घटो न पटो भवतीत्यादौ समासविक्लपादर्थाद्विभाषासूत्राधिकारादसमासेऽपि तेनारोपितपटत्ववान् घटः इति शाब्दबोधः।

प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः। तत्र विशेष्यतया क्रियान्वयनियमात्सुबन्तेनासामर्थ्येऽपि सूर्यं न पश्यतीत्यर्थे असूर्यललाटयोदृशितपोः इति सूत्रे असूर्य इत्यसमर्थसमासविधानात् ज्ञाप्यते। अतश्चोच्यते-

**प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्**[3]। इति

अत्र क्रियापदं गुणस्याप्युपलक्षणं वर्तते इति बहवो वदन्ति। अत एव सूत्रभाष्ये प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं कुरुत इत्युक्तम्।

**गुणस्योदाहरणमत्र प्रस्तूयते**- अत्र गुणस्योदाहरणत्वेनोच्यते नास्माकमेकं प्रियमिति। अत्रैकत्वसंख्यायाः प्रतिषेधेऽपि बहुत्वस्य प्रतीतिर्भवति। तेन बहुत्वप्रियायाः प्रतीतिः।

एवं न सन्देहो नोपलब्धिरित्युदाहरणम्। यतो हि सन्देहोपलब्ध्यादयः गुणा एव। तेन सन्देहात्यन्ताभाव उपलब्ध्यत्यन्ताभाव इति बोधः।

**क्रियाया उदाहरणमत्र प्रस्तूयते**– क्रियाया उदाहरणमुच्यते अनचि च इति गेहे घटो नास्तीत्यादयः। समासस्थले प्रसज्यप्रतीषेधीयस्य नञोऽत्यान्ताभावः इत्यर्थोऽसमासस्थले प्रसज्यप्रतीषेधीयस्य नञः अत्यान्ताभावोऽन्योन्याभावश्चार्थः। तादात्म्येतरसम्बन्धाभावोऽत्यन्ता–भावस्तादात्म्यसम्बन्धाभावोऽन्योन्याभावो भेदः इत्यर्थः।

असूर्यम्पश्याः राजदाराः, अनचि च इति समासस्थलीयनञर्थात्यन्ताभावस्योदाहरणम्। तेन सूर्यकर्म–कदर्शनप्रतियोगिकाभाववन्तः राजदाराः किञ्चाजव्यवहितपूर्वत्वावच्छिन्नर्यनिष्ठस्थानितानिरूपितादेशताव–द्दिवत्वकर्तृकसत्ताप्रतियोगिकोऽभाव इति बोधः। गेहे घटो नास्तीत्युदाहरणात् गेहनिरूपिताधेयतावद्घटक–र्तृकसत्ताप्रतियोगिकोऽभाव इति बोध इदञ्चासमासस्थलीयनञर्थात्यान्ताभावस्योदाहरणम्। घटो न पटः इति अन्योन्याभावस्योदाहरणम्। तेनारोपितपटत्वावान् घटः इति बोधः।

**उपसंहारः–**

एवं निपातार्थविचारे श्रीनागेशभट्टेनात्यन्ताभावस्य विशेष्यतया तिङर्थक्रियायामन्वयः, एवार्थविचारः अतीवगम्भीरतया विस्तरेण च चर्चितम्। अत्र तु केवलं दिङ्मात्रं दर्शितम्, अधिकज्ञानाय तत्रैव परमलघुमञ्जूषायां वैयाकरणसिद्धान्तलघुमञ्जूषादिग्रन्थेषु द्रष्टव्यमिति सामान्येन निपातार्थविषये लघुप्रबन्धः कृतः इति शम्।

## पादटिप्पणी

1. परमलघुमञ्जूषा, निपातार्थविचारः।
2. तत्रैव।
3. तत्रैव।

## सन्दर्भग्रन्थसूची

1. एन. एस रामानुजताताचार्यः (सम्पा.)। शाब्दबोधमीमांसा। दिल्लीः राष्ट्रियसंस्कृतसंस्थानम्, 2005।
2. जानमद्दिरामकृष्णः (सम्पा.)। लघुमञ्जूषाभाट्टरहस्यविमर्शः। तिरुपतिः राष्ट्रियसंस्कृतविद्यापीठम्, 2002।
3. झा रमेशचन्द्रः(सम्पा.)। पाणिनीयव्याकरणम्। वाराणसीः चौखम्बा कृष्णदास अकादमी, 2005।
4. पाणिनिः। अष्टाध्यायी। सम्पा. –पुष्पादीक्षितः, दिल्लीः ज्ञानभारती पब्लिकेशन्, 2009।
5. पाणिनिः। पाणिनीयशिक्षा। सम्पा.–रमाशङ्कर मिश्रः। वाराणसीः चौखम्बा सुरभारती प्रकाशन, 2015।
6. नागेशः। परिभाषेन्दुशेखरः। सम्पा. जयदेवशर्ममिश्रः। वाराणसीः चौखम्बा विद्याभवन, 2009 (प्रथमसंस्करणम्)।
7. नागेशः। परमलघुमञ्जूषा। सम्पा.–जयशङ्करलालत्रिपाठी। वाराणसी–चौखम्बा कृष्णदास अकादमी, 2006।
8. नागेशः। परिभाषेन्दुशेखरः। सम्पा. विश्वनाथमिश्रः। वाराणसी चौखम्बा सुरभारती प्रकाशन, 2014 (प्रथमसंस्करणम्)।
9. भर्तृहरिः। वाक्यपदीयम्। सम्पा. सत्यनारायण खण्डूडी। वाराणसीः चौखम्बा विद्याभवन, 2006।
10. भट्टोजिदीक्षितः। सिद्धान्तकौमुदी (तत्त्वबोधिनीसहिता)। सम्पा. गिरिधरशर्मा, परमेश्वरानन्दशर्मा। दिल्ली मोतीलाल बनारसीदास, 1961 (प्रथमसंस्करणम्)।
11. युधिष्ठिरमीमांसकः सम्पा.। संस्कृत व्याकरण शास्त्र का इतिहास।। वारणसी चौखम्बा पब्लिशर्स, 2003।

*शोधछात्रः,*

*ललित–नारायण–मिथिला–विश्वविद्यालयः, दर्भङ्गा, बीहारः।*

ISSN 2582-2608

# वैदिकसाहित्ये सूर्यविज्ञानम्

सुश्री गौरी राठौर, सुश्री ज्योति राठौर

**शोधसारः-**

*भारतीय शास्त्रेषु एकः एतादृशः पदार्थः प्राप्यते, यस्मिन् ज्ञाते सर्वविषयकं विज्ञानं स्वतः उपलभ्यते। श्रुतेरिदमनुशासनं ब्रह्मविज्ञानमवलम्ब्यैव लोके प्रवृत्तम्। किन्तु विज्ञानस्यास्य कीदृशं स्वत्वं वर्तते? केनोपायेन इदं विज्ञानं कार्यक्षेत्रे उपयुज्येत इति ऋषयः विशेषेणानुसन्धानं कृतवन्तः। त एव विदन्ति यत् सूर्य एव सर्वप्रकाराणां विज्ञानानां मूलस्तम्भः वर्तते। सृष्टिः स्थितिः प्रलय अर्थात् जागतिकाः समेऽपि व्यवहाराः सूर्यादेव प्रवृत्ताः। केवलमिदमेव नापितु सूर्य एव देवयानपक्षस्य लक्ष्यस्वरूपभूतः वर्तते। यदि वयं सूर्यं सर्वविधं मुक्तिद्वारं वर्णयामश्चेदत्युक्तिः न भविष्यति। विशुद्धमात्मज्ञानं स्वरूपोपलब्धिं च ज्ञातुं सौरतस्त्वाश्रयस्य ग्रहणं परमावश्यकमस्ति। सूक्ष्मेक्षिकया पर्यालोचनेनेदमवगम्यते यत् संसारे विज्ञानात् ऋते नान्यत्किञ्चिदस्ति। इह यत्किमपि दृश्यते तत्सर्वं प्रणालीभेदजनितकार्यमेव वर्तते। अत एव साधकेभ्यः द्वयमपि समानरूपेणावश्यकं विद्यते। योगमार्गे विज्ञानं विज्ञानमार्गे च योगः परमसहायकः वर्तते। स्वामिनः विशुद्धानन्दमहाराजा सूर्यविज्ञानेऽतीव पारङ्गताः आसन्। ते नामश्रवणमात्रेणैव विभिन्नपदार्थानाकृष्य समुपलब्धुं समर्था अवर्तन्त। यदा विषयेऽस्मिन् गोपीनाथकविराजेन स्वामिनः विशुद्धानन्दाः पृष्टाः यत्कथमिदं विज्ञानं कार्यं करोति? तदा स्वामिनोऽवोचन् यत् यदि अस्मासु आकर्षणक्षमता भवेत् वयञ्च यदि उपादानानि विद्मश्चेत् यद्यत् सूर्यरश्मीणां विस्तारक्षेत्रे वर्तते तदाकृष्य आनेतुं शक्यते। बृहदाकारस्थं स्थूलवस्त्वपि देशदेशान्तरेभ्योऽल्पे एव समये समुपस्थापयितुं शक्यते। नेदं किञ्चिदाश्चर्यकरं यतो हि सूर्यविज्ञानस्य वैज्ञानिकता असन्दिग्धा विद्यते। इदं सूर्यविज्ञानं तावदेव वैज्ञानिकं वर्तते यावत् भौतिकविज्ञानं वर्तते। सूर्यविज्ञानस्य क्षेत्रमसीमितं विभुवत् च व्यापकं वर्तते। किन्तु साम्प्रतिके कालेऽपि अत्याधुनिकं विज्ञानं सूर्यविज्ञानस्य सीमाक्षेत्रमपि न स्पृष्टवत्।*

वैदिकसाहित्ये सूर्यस्य सौरोर्जायाश्च विषये विस्तृतं वर्णनं संदृश्यते। साहित्येऽस्मिन् खलु सूर्यस्य महत्त्वं सूर्यशक्तेराधारः सूर्यचराचरजगतः सम्बन्धः सौरोर्जायाश्च विविधानि चमत्काराणि प्राप्यन्ते। लेखेऽस्मिन् केचन अत्यन्तमहत्वपूर्णाः विषया एव समुल्लिख्यन्ते। प्राचीनैः भारतीयवैदिकैः ऋषिभिः प्रकाश-ताप-ऊर्जायाश्च एकमात्रं मूलस्तोत्ररूपः सूर्यः प्रतिष्ठितः। वेदाः सूर्यमेव समस्तचराचरजगतः समुत्पादकं कथयन्ति। वैदिकमन्त्रेषु सूर्यस्य स्तुतयः याथातथ्येन इममुपर्युक्तं तथ्यं समुद्घोषयन्ति-

**नूनं जनाः सूर्येण प्रसूतः।**

सूर्यः स्वतेजसा पृथिवीं धारयन्नस्ति। ऋग्वेदे वर्णनं लभते यत् सूर्यः निजाकर्षणशकत्या पृथिवीं धारयति अत एव पृथिवी न विनश्यति। मन्त्रे आकर्षणशकत्याः कृते 'यन्त्र' शब्दः प्रयुक्तः। नियन्त्रणशक्तिरेव यन्त्रशक्तिः कथ्यते-

**सविता यन्त्रैः पृथिवीं अरम्णात्।**[1]

इयमेव वार्ता यजुर्वेदे समधिकस्पष्टरूपेण वर्णिता यत्सूर्यः स्वमरीचिभिः (किरणानामाकर्षणशकत्या) धरित्रीं परितः रुणद्धि। एतावदेव नापितु सकलद्यावापृथिवीं सूर्यः निजाकर्षणशकत्या धारयति-

**वयस्कम्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः।**[2]

वैदिकमन्त्रेष्विदमपि विज्ञापितमस्ति यत् सूर्यः स्वशक्तिभिः पृथिवीलोकं द्युलोकञ्चावरोध्य स्थितोऽस्ति अर्थात् सूर्यः सर्वेषां ग्रहाणां मध्येऽस्ति तेषाञ्च आकर्षणकेन्द्रमस्ति। पृथिवीसूर्ययोः मध्ये स्थिताः चन्द्रमा बुधशुक्राः पृथिवीलोके स्थिताः तथा च सूर्यादुपरि स्थिताः मङ्गलबृहस्पतिशनिश्च द्युलोकस्थिताः कथ्यन्ते। एतेषां सर्वेषां ग्रहाणां धारणमाकर्षणञ्च सूर्य एव कुरुते। आकर्षणशक्तिसम्पन्नः सूर्यः प्रकाशतापरूपिण्याः आनन्दशक्तेः स्त्रोतोऽपि विद्यते। परिणामतः पृथिवी

एव न अपितु समस्तमपि सौरमण्डलं सूर्याश्रितमेव विद्यते। सूर्य इमामूर्जां स्वतोऽथवा सौरमण्डलस्य बाह्यजगतः प्राप्नोति। भारतीयतन्त्रिकाः कथयन्ति यत् सूर्य ऊर्जायाः माध्यमः वर्तते। असाधरणशक्तिसम्पन्नस्य मध्योन्नकाचस्य (Lens) सदृशमैव सूर्यः स्वकार्याणि सम्पादयति। अस्य मध्योन्नतकाचस्य मध्यतः परमज्योतिः जगत्यवतरति। परब्रहमणः या स्वकीया रश्मिर्वर्तते ततः समुद्भूतं तेज एव सूर्यः वर्तते। सूर्यस्य जगति मातृत्वं जगत्पालकत्वं जगत्संहारकत्वञ्च पूर्णब्रह्मणः परमात्मनः रूपे प्रतिष्ठापितमस्ति–

**विश्वानि देव सवितुर्दुरितानि परासुव यद्भद्रं तन्न आसुव।**[3]

सकलसंसारस्य निर्माता सृष्टिपालकः जगत्संहारकः किं वा विश्वस्मिन् सर्वतो देदीप्यमानः जगत् शुभकर्मसु प्रवर्तकः हे परब्रह्मस्वरूपः सवितृदेवः! भवान् अस्माकं सकलाधिभौतिकान् समस्ताधिदैविकान् सम्पूर्णाध्यात्मिकाश्च दोषान् अस्मात् दूरीकरोतु किन्तु यत् कल्याणमयं विद्यते तत् अस्मभ्यं विश्वस्य सकलप्राणिभ्यश्च परितः ददातु।

**संसारस्यात्मा सूर्यः**– सूर्यः सौरमण्डलस्य ग्रहोपग्रहाणां पूर्णः नियन्ता विद्यते। सूर्य एव सौरमण्डलाय ऊर्जां प्रददाति। सैव स्वाकर्षणतेजसा पृथिव्यादीनां ग्रहाणां धारकोऽस्ति। सूर्यतेजसैव संसारस्य चराचरे गतिः प्रगतिः विकासः विलासश्च विद्यते। सूर्यादेव लोकाः जीवनशक्तिं प्राप्नुवन्त्यतः सूर्यः जगत आत्मा प्रोक्तः–

**सूर्य आत्मा जगतस्स्थुषश्च।**[4]

ऋग्वेदस्यैकस्मिन् मन्त्रे 'नाना सूर्याः तथा सप्त आदित्याः इति उल्लेखः लभते अर्थात् सूर्यो बहवः विद्यन्ते सप्तसूर्येभ्योऽयम् अभिप्रायः ज्ञायते यत् सप्तसौरमण्डलानि सन्ति।

**सप्त दिशो नाना सूर्याः। देवा आदित्या ये सदा।**[5]

अथर्ववेदस्य कथनमस्ति यत् केन्द्रीयः सूर्यः कश्यपोऽस्ति। इमे सप्त तस्य अङ्गानि सन्ति। तैत्तिरीयारण्यके एतेषां सप्तसूर्याणां नामानि प्रदत्तानि सन्ति–

**आरोगः भाजः पहरः पतङ्गः स्वर्णरः ज्योतिषीमान् विभासश्च सप्त।**[6]

**कश्यप....................यस्मिन् अर्पिताः सप्तसाकम्।**[7]

**सूर्यस्यानन्तोर्जाया आधारः**– अथर्वेदे वर्णनमस्ति यत् सूर्यस्य ऊर्जाया आधारः सोमः (हाइड्रोजन) वर्तते। सोमादेव सूर्यः शाक्तिमाप्नोति– **सोमेन आदित्या बलिनः।**[8] इदं तथ्यं यजुर्वेदे पृथग्रूपे प्रस्तुतम्। मन्त्रस्य कथनमस्ति यत् सूर्ये निम्नानि तत्वानि समुपलभ्यन्ते–

* **अपां रसम्**– जलस्य सारभागः यश्च ऊर्जारूपे विद्यते। ''उदवयस्'' इति शब्दः ऊर्जायाः बोधकोऽस्ति। जलस्यायं सारभागः ''सोमः'' (हाइड्रोजन) वर्तते। सोमस्य कृते अपां रसः इति पारिभाषिकशब्दस्य प्रयोगोऽभूत्।

* **अपां रसस्य यो रसः**– अस्यार्थं विद्यते यत् जलस्य सारभागस्य सारांशः रंगगन्धस्वादहीनः वायु (हीलियम) विद्यते। मन्त्रे ''हीलियम'' इत्यस्य कते ''अपां रसस्य यो रसः'' इत्ययं पारिभाषिकः शब्दः प्रयुक्तः। मन्त्रे ''सूर्ये सन्तं समाहितम्'' द्वारा सुस्पष्टं कृतं यत् इमे उभेऽपि तत्वे सूर्ये विद्यमाने स्तः।

**अपां रसं उदवयसं सूर्ये सन्तं समाहितम्।**
**अपां रसस्य यो रससतं वो गृह्णाम्युत्तमम्।।**[9]

आधुनिकविज्ञानस्यानुसारं सूर्ये नवतिप्रतिशतं सोमतत्वं (हाइड्रोजन) विद्यतेऽष्टप्रतिशतं हीलियम तत्वं वर्तते द्वि प्रतिशतञ्च अन्यानि तत्वानि सन्ति। सूर्यसतहस्य तापमानं षट्सहस्रडिग्रीसेन्टीग्रेड परिमितं वर्तते। अनेन आन्तरिकतापेन सोमतत्वं (हाइड्रोजन) हीलियमतत्वरूपे परिवर्तितं भवति। इदं परिवर्तनं Thermo nuclear reaction इत्यपि कथ्यते। अङ्गरोद्वायुनामेतेषां रूपान्तरणानां कारणेन सूर्यः सततं बृहतीमूर्जां प्राप्नोति। स्वामिमामूर्जां प्राप्तं सूर्याय प्रतिपलं पञ्चाशल्लक्षटनपरिमितं द्रव्यमानमपेक्षितम्।

**सूर्यं परितः विशालाङ्गारोद्वायुः**– ऋग्वेदे मन्त्रद्रष्टा ऋषिः ब्रवीति यत् मया योगदृष्ट्या दृष्टं यत् सूर्यं परितः सूदूरपर्यन्तं शक्तिमन्त्रः धूमाः प्रसृताः सन्ति। बलवतः धूमस्य कृते ''शकमयं धूमम्'' अर्थात् महाशक्तियुक्तः धूमशब्दः प्रयुक्तः– **शकमयं धूमम् आरादपश्यम् विषूवता पर एनावरेण।**[10]

**सूर्यचिह्नानि**- ऋग्वेदे वर्णनं लभ्यते यत् सूर्यमण्डले तिमिरचिह्नानि वर्तन्ते। मन्त्रस्याभिप्रायः वर्तते यत् सूर्यः मण्डलरजोयुतो भूत्वा विचरति- **सूर्यस्य चक्षू रजसैत्यावृतम्।**[11]

**सूर्यस्योर्जादोहनम्**- ऋग्वेदयजुर्वेदयोः वर्णनमस्ति यत् सूर्यस्य ऊर्जायाः दोहनं त्रितः करोति। त्रितेऽस्मिन् त्रयः देवाः गण्यन्ते ते च इन्द्रगन्धर्व वसवः सन्तीति। सर्वप्रथममिन्द्र ऊर्जाज्ञानं प्राप्तवान् तदनु गन्धर्वाः अस्याः परीक्षणं कृतवन्तः वसवश्चेमामूर्जां मूर्त्तरूपे परिणतां विहितवन्तः। वसवस्ते विद्वांसः वर्तन्ते ये भौतिकविज्ञानस्य विशेषज्ञाः सन्ति। एकोऽस्याः ज्ञानं प्राप्तवान् द्वितीयः परीक्षणमाध्यमेनास्याः सन्तां प्रमाणितवान् तृतीयश्च वसुरिमां साक्षात्कृत्य प्रयुक्तवान्। इत्थं हि सर्वविधं सूर्याविष्कारविज्ञानं त्रित एवऽकरोत्।

**त्रित एनम् आधुनिक इन्द्र एणं प्रथमो अध्यतिष्ठत्।**
**गन्धर्वो अस्य रशनाम् अमृतघ्णात् सूरादश्वं वसवो निरतष्ट।।**[12]

**सौरोर्जाया आविष्कारका**- ऋग्वेदे वर्णनं प्राप्यते यत् परमात्मना सूर्ये ऊर्जायाः महाकोषः संस्थापितः। वसिष्ठभरद्वाजौ ऋषी सौरोर्जाया आविष्कारकावास्ताम्। एकस्मिन् मन्त्रे कथितं यत् ऋषयः सूर्यात् तां धर्म-ऊष्मां निःसारितवन्तः। सौर-ऊर्जायाः गवेषणा वसिष्ठेन वसिष्ठपुत्रैः भरद्वाजेन भरद्वाजवंशजैश्च कृता। इमे सौर-ऊर्जायाः जननसम्बन्धिनः मन्त्राणामृषयः वर्तन्ते-

**स शेवधिं निदधिषे विवस्पतिः।**[13]
**आ सूर्यादभरन् धर्ममेते।**[14]

**सूर्यतत्त्वरहस्यम्**- प्रश्नोपनिषदनुसारं सूर्यतत्वस्य ज्ञातृणां कथनमिदं वर्तते यत् असंख्यमरीचिभिर्युतः प्रकाशमयो तप्तः सूर्यः विश्वस्य सकलरसानां केन्द्रमस्ति। सर्वाण्यपि रूपाणि रागा आकृतयश्च सूर्यादेव जीनं लभन्ते प्रकाशिताश्च भूयन्ते। सूर्यः (सविता) एव सकलचराचरजगतोत्पत्तिस्थानं विद्यते। अयमेव सर्वेषां प्राणिनां जीवनज्योतेः मूलस्त्रोतः वर्तते। सहस्त्रमरीचिमान् सूर्यः संसारस्य सर्वविधानि शतशोऽथ सहस्त्रशः कार्याणि सम्पादयन्नुदेति। जगति ताप (उष्णता) प्रकाशविस्तारणम् ऋतूनां परिवर्त्तनं सकलजगति जीवनोर्जाप्रदानादिकं समस्तमप्यसंख्यं कार्यं सूर्य एव सम्पादयति।

**सहस्त्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्कयेष सूर्यः।**[15]

सूर्योपनिषदि सूर्यपुराणे चापि सूर्यस्यासाधारणत्वं गुणगौरवं कार्यं च प्रकाशयन् बहून्युद्धरणानि प्राप्यन्ते। तत्रायं सूर्यदेवः भगवानिति स्वीकृतः-सूर्यात् भवन्ति भूतानि सूर्येण पालितानि तु।

बृहद्देवतानामधेये ग्रन्थे आचार्य शौनकः प्रब्रवीति यत् एकमात्रं सूर्यादेव भूतभविष्यवर्तमानानां सर्वेऽपि स्थावरजङ्गमाः पदार्थाः समुद्भवन्ति प्रलये च सूर्ये एव विलीयन्ते। ज्योतिषशास्त्रस्य प्रमुखे प्रसिद्धे च सूर्यसिद्धान्तनामके ग्रन्थे सूर्यः सर्वस्य जगत आदिकारणभूतत्वात् आदित्येति नाम्ना संस्मृतोऽस्ति। तत्ववेत्तारः महर्षय उपनिषदां माध्यमेनेदमपि ज्ञापितवन्तः यत् भूतलेऽस्मिन् यज्जलं वर्षति तदुत्पत्तिरपि सूर्यादेव भूयतेऽतः सर्वेभ्यः जलरूपजीवनप्रदातृत्वात् सूर्यः समेषां पिता विद्यते। एते ज्ञानिन आचार्या इदमप्युक्तवन्तः यत् सूर्यकिरणेषु रक्तनीलपीतहरितादयः सप्त रागा अपि भवन्ति। एते रागा एव सूर्यरथं वहमानाः सप्ताश्च इति संज्ञया व्यवह्यन्ते।

**सूर्यस्य वर्णमाला**- ऋषिभिरिदमनुभूतं यत् सूर्यरश्मयः जातिविषये संख्याविषये चाप्यनन्तास्सन्ति। सर्वासां सम्मिश्लितं रूपं 'प्रभा' इति शब्देन व्यवह्यते। अस्याः सकलवर्णप्रभायाः प्रकाशाद्वा प्रथमो स्तरः रक्तपीतनीलादिभ्यः रागेभ्यः मरीचीनामाविर्भावः भवति। द्वयोरथवा आधिकाधिककिरणानां पारस्पर्येण साहचर्येण वा बह्वीनामुपवर्णकिरणानां निर्मितिः भवति। शुक्लवर्णस्य प्रकाशस्य विश्लेषणं कृत्वा पृथक्-पृथक् रागाणां मयुखान् परिज्ञाय तेषां विशिष्टाः गुणा अपि ज्ञाता। सूर्यरश्मीणां गहनाध्ययनस्येयं प्रकिया "सूर्यविज्ञानम्" इति नाम्ना ज्ञायते। प्राचीनकाले हि श्रेष्ठा उच्चकोटिन्यः महर्षय आचार्याश्च इमं विज्ञानं यथावत् विदन्ति स्म। समुचितेषु अवसरेषु च विज्ञानमिदं प्रयुञ्जतेऽपि स्म। सूर्यविज्ञानानुसारं

जगतः नानापदार्थाः सूर्यस्य विभिन्नरश्मीणां मिश्रणभेदात् समुद्भवन्ति। इमे पदार्था अत्यन्तं सूक्ष्मबीजरूपे मयूखेषु विद्यमानाः सन्ति। यः पुरुषः सूर्यस्येमान् मयुखान् वर्णमालाः वा यथा विधिः परिज्ञानाय विभिन्नेष्वनुपातेषु मिश्रितुं शिक्षति। सः मनुष्यः निश्चयेन विभिन्नान् पदार्थान् स्वेच्छानुसारं कर्त्तुं समर्थः भवितुं शक्नोति। विभिन्नवस्तूनां रचनार्थं पृथक्-पृथक् वर्णानां मयूखाः एकस्मिन् विशिष्टे क्रमेऽनुपाते च सम्मिश्र्यन्ते। यथा वर्णमालायाः विभिन्नान्यक्षराणि सम्मेल्यशब्दः पदं वाक्यं वा निर्मीयते तथैव विभिन्नवर्णानां रश्मीनां संयोजनेन विभिन्नाः पदार्थाः निर्माप्यन्ते। रश्मीणां प्रकृत्या वर्णानां च गुणधर्मेण परिचिताः प्रयोक्तारः यद्यत् वस्तु रचयितुमिच्छन्ति ते तस्य वस्तुनः रचनावयवनामपि ज्ञानं यथावत् प्राप्नुवन्ति कुर्वन्ति वा। सूर्यः सवितानाम्नाऽपि व्यवह्यते। इदमेवाभिधानमाधारी कृत्य सूर्यविज्ञानं ''सविताविद्या'' अपि कथ्यते । इयं विद्या रहस्यमयी विद्या वर्तते। अस्याः विद्यायाः वेत्ता सिद्धिप्राप्तः योगी स्वेच्छानुसारं सूर्यमयूखान् कस्मिन्नपि इतरपदार्थरूपे परिवर्तयितुं समर्थः भवति।

**सूर्यविज्ञानवेत्तारः मनीषिणः**- आधुनिके युगे परमहंसः योगिराजः स्वामिविशुद्धानन्दमहाराजास्मिन् विज्ञानविषये विशिष्टाः सूचनाः ज्ञानञ्च प्रदत्तवान्। स्वामिवर्यः सूर्यविज्ञानविषये विभिन्नप्रयोगानप्यकार्षीत्। विशुद्धानन्दमहाराजायं कतिपयेष्ववसरेषु विशिष्टानां देशीयानां वैदेशिकानाञ्च पुरुषाणामुपस्थितौ सूर्यरश्मीणां मिश्रणेन नानाप्रकाराणि वस्तूनि कंदमूलफलपुष्पप्रवालमुक्ताहीरकादीनि निर्माय सविताविद्यां प्रमाणितवान्। परमहंसः स्वामिविशुद्धानन्दमहाराजः सूर्यविज्ञानशिक्षां त्रिविष्टपस्थिते ज्ञानगञ्जनामके स्थाने योगाश्रमे प्राप्तवान्। बहूनि वर्षाणि तस्मिन्नाश्रमे संस्थित्यानवरतं परिश्रमं प्रकृत्य धैर्येण साधनां प्रकुर्वन्नसौ स्वामी विज्ञानविद्यायां योगविद्यायाञ्च पारङ्गतोऽभूत्। परमहंसस्य श्रीमतः श्यामानन्दस्य समीपे तेन सूर्यविज्ञानशिक्षा संप्राप्ता। परमहंसः भृगुराजस्तस्मै योगविद्यां प्रदत्तवान्। महामहोपाध्यायः पं. गोपीनाथकविराजः स्वे ज्ञानमङ्गल नामके पुस्तके सूर्यविज्ञानस्य चर्चां कुर्वन् लिखति-

''विज्ञानस्य वार्तामाकर्ण्य कोऽपीदं न चिन्तयेत् यदिदं विज्ञानं पाश्चात्यविज्ञानवत् जडविज्ञानं वर्तते। वस्तुतस्तु ये विज्ञानं जडं कथयन्ति तदपि एकान्तभावात् जडं नास्ति। विशिष्टज्ञानमेव विज्ञानशब्दस्य वास्तविकोऽर्थः विद्यते। तथाकथिते जडचेतने उभेऽपि विज्ञानविषये एव स्तः। सूर्यविज्ञानस्य केन्द्रभूतः स्वस्थः प्रधानश्चाश्रयः विद्यते अत एवेदं विज्ञानं सूर्यविज्ञानं कथ्यते।''

**सूर्यस्य परिभ्रमणम्**-

**उदेति प्रसविता जनानां महान् केतुरर्णवः सूर्यस्य।**
**समानं चक्रं पर्याविवृत्सन् यदेतशो वहति धूर्षुर्युक्तः।।**[16]

मन्त्रेऽस्मिन् ''पर्याविवृत्सन्'' इति शब्देन सूर्यस्य स्वकेन्द्रे परिभ्रमणं वर्णितम्। अनेन सहैव सूर्यस्य परिभ्रमणमस्य कारणमपि सूर्यस्य स्वकीयः ''अर्णवो महान् केतो समुद्रतुल्यः चक्रवेगान् महान स्फुरणशीलः ज्वालासमूहः विज्ञापितः। यथा अग्निचूर्णचक्रात् वेगेन निःसरन्त्यः स्फुरणशीलाः ज्वालाः सूर्यं परिभ्रामयन्ति। सूर्यस्य ज्वालासमूहः संस्फुरति इत्यपि वेदमन्त्रे प्रकाशितम्- **यः सप्तरश्मिर्बृषभास्वनु विष्मानवासृजत् सर्त्तवे सप्त सिन्धून्। यो रौहिणमस्फुरत्।**[17]

अन्यैः ग्रहैस्सार्धं सूर्यस्य सम्बन्धः- **केतुं कृणवन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः**[18]**।**

हे मानवाः! सूर्योऽयं स्वोष्णकिरणैः प्रकाशरहितेभ्यः प्रकाशारूपेभ्यश्च रूपं दातुं प्रकटितो भवति। मन्त्रेऽस्मिन्निदं वर्णितं यत् यावन्तोऽपि खे पृथिव्यादयः ग्रहाः प्रकाशमानाः सन्ति ते समेऽपि सूर्यादेव प्रकाशितास्सन्ति।

**सवितुर्देवस्योपस्थे विश्वाभुवनानि तस्थुः।**[18]

द्योतमानस्य मरीचिमालिनः सूर्यस्य आश्रयं समेऽपि पृथिव्यादयः लोकाः गृह्णन्ति अर्थात् सूर्यस्य आकर्षणेन संस्थिताः सन्ति। **एता उत्या उषसः केतुमक्रत पूर्वेऽर्धे रजसो भानुमञ्जते**[19]**।**

इमे सूर्यस्य तप्तमयूखाः कस्यापि लोकस्य ''पूर्वे अर्धे'' पुरस्तात् अर्धभागं प्रकाशयन्ति परिणामतः दिवसनिर्माणं संभवति। ऐतरेयब्राह्मणेऽपि सिद्धान्तोऽयं प्रतिपादितः- **स वा एष कदाचनास्तमेति नोदेति। तं यदस्तमेतीति मन्यन्ते**

**अह एव तदन्तमित्याधात्मानं विपर्यस्यते रात्रिमेवावस्तात् कुरुतेऽहः परस्तात्। अथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रिमेव तदन्तमित्वाऽथात्मानं विपर्यस्यते। अहरेवावस्तात्कुरुते रात्रिं परस्तात्[20]।**

अयं सूर्यः कदाचिदपि अस्तः न भवति कदाचिच्च न उदेति। अयमस्तः मन्यते सः दिनस्य समाप्तिं कृत्वा पृथिव्याः द्वितीये पक्षे भवति। तदा अत्र रात्रिं करोति। ये चैनं प्रातःकाले उदयमानं मन्यन्ते ते न जानन्ति यदयं रात्रिं समाप्य पृथिव्याः द्वितीये पक्षे (स्थाने) भूत्वा अत्र दिनं तत्र रात्रिञ्च करोति। आयातु मित्र ऋतुभिःकल्पमानः संवेशयन् पृथिवीमुस्त्रियाभिः। सूर्यः ऋतुभिः सह युक्तो भूत्वा स्वैः मयूखैः पृथिवीं नियतक्षायां संवेशयन् समागच्छति।

''उस्त्रियाभिः गोभिः किरणैरित्यर्थः'' इति सायाणः।

## पादटिप्पणी

1. ऋग्वेदः 10/149/1
2. यजुर्वेदः 15/16
3. यजुर्वेदः 30/3
4. ऋग्वेदः 1/115/1, यजुर्वेदः 7/42, अथर्वेदः 13/2/35
5. ऋग्वेदः 1/114/3
6. तैत्तिरीयारण्यकम् 1/7/1
7. अथर्ववेदः 13/3/10
8. अथर्ववेदः 14/1/2
9. यजुर्वेद 9/3
10. ऋग्वेदः 1/164/43
11. ऋग्वेदः 1/164/14
12. ऋग्वेदः 1/163/2 यजु. 2/9
13. ऋग्वेदः 2/13/6
14. ऋग्वेदः 10/181/3
15. प्रश्नोपनिषद् 1/8
16. ऋग्वेदः 2/12/12
17. ऋग्वेदः 1/6/3
18. ऋग्वेदः 1/35/5
19. ऋग्वेदः 1/92/1
20. एतरेयब्राह्मणम् 3/4/6

## सन्दर्भग्रन्थसूची

1. ऋग्वेद का सुबोधभाष्य पं. दामोदर सातवलेकार (स्वाध्याय मण्डल पारडी 1993)
2. यजुर्वेद (माध्यन्दिन संहिता) वासुदेवलक्ष्मण शास्त्री (चौखम्बा संस्कृत संस्थान वाराणसी )
3. अथर्वेद पं. जयदेव शर्मा (आर्यसाहित्य मण्डल लिमिटेड अजमेर)
4. प्रश्नोपनिषद् शांकरभाष्य (गीताप्रेस गोरखपुर)
5. तैत्तिरीय आरण्यक सायणाचार्यभाष्य (कलकत्ता प्रकाशन)
6. ऐतरेयब्राह्मण डॉ. सुधाकर (मालवीय तारा बुक एजेन्सी वाराणसी)

*शोधच्छात्रा,*

*गुरुकुल-काङ्गडीसंस्कृतविश्वविद्यालयः, हरिद्वारः, उत्तराखण्डः।*

*शोधच्छात्रा,*

*गुरुकुल-काङ्गडीसंस्कृतविश्वविद्यालयः, हरिद्वारः, उत्तराखण्डः।*

ISSN 2582-2608

# समाधिदीपिकाकर्तुः श्रीकृष्णब्रह्मानन्दसरस्वतिनः सारस्वतजीवनम्

**श्री सञ्जयकुमारमण्डलः**

*शोधसारः-*

*वेदान्ते ब्रह्मसम्बन्धिनी आलोचना वर्त्तते। अज्ञानादिना अविद्यायुक्तत्वेन जीवः स्वस्वरूपं अनवाप्य अज्ञानावच्छिन्नचैतन्यरूपेण तिष्ठति। महावाक्यादिज्ञानपुरस्सरं यदा निरन्तराभ्यासेन जीवस्य स्वस्वरूपं ज्ञानं भवति तदा सः मुक्तः सन् पश्यन्नपि न पश्यति सुपुप्तवत् तिष्ठति तदा सः जीवन्मुक्तः पुरुषः मुक्तिं लभते। अद्वैतवेदान्तस्य भाष्यकारेण श्रीकृष्णब्रह्मानन्देन समाधिदीपिका प्रणीता।*

**कूटशब्दाः**- समाधिदीपिका, वेदान्तः, ब्रह्म, पाण्डुलिपिः, सारस्वतजीवनम्॥

श्रीकृष्णब्रह्मानन्देन प्रणीता 'समाधिदीपिका'[1] एका अप्रकाशिता पाण्डुलिपिः वर्तते। पाण्डुलिपिः कस्यापि देशस्य ऐश्वर्यं सम्पत् चास्ति। तस्यां तस्य देशस्येतिहासः निहिता वर्तते, तथा च तत्कालीनसमाजस्य, संस्कृतेः दर्शनस्य च नैकाः सूचनाः प्राप्यन्ते। अतः तस्य सुरक्षा राष्ट्रस्य तथा च नागरिकानां दायित्वमस्ति। संस्कृतपाण्डुलिपीणां संरक्षणां शास्त्रसंरक्षणस्य काचित् विशिष्टादिगस्ति। षाण्मासिकप्राक्शोधपाठ्यक्रमे पाण्डुलिपीनां संरक्षणसम्बन्धेन नैकानि अध्यापनानि प्राप्तानि। तदा एव पाण्डुलिपिविषये शोधकार्यं साधयितुं मे समीहा संजाता यथाश्रुतम्-

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥**[2]

अतः वेदशास्त्रस्य प्रामाण्यं प्रत्यक्षसिद्धमेव। वेद इति 'विद्' धातोः घञन्तात् ज्ञानार्थे वर्तते। वेदशास्त्रम् अपौरुषेयमिति मीमांसकादिदार्शनिकाः आमनन्ति। तस्यैव वेदस्य चत्वारः भागाः सन्ति, तद्यथा- संहिता-ब्राह्मणारण्यकोपनिषच्चेति। तत्र संहितायां यागानुष्ठानप्रतिपादकस्तुतिगायनमन्त्राणां वर्णनं वर्त्तते। ब्राह्मणन्तु वेदस्य व्याख्यानग्रन्थः इति दयानन्दसरस्वतिना उक्तम्। अत्र यागानुष्ठानस्य वर्णनं लभ्यते। आरण्यके उपासनापद्धतेः प्रतिपादनम् अस्ति। ब्रह्मविद्या उपनिषदः विषयः। अस्य उपनिषदः अपरं नाम वेदान्तेति। वेदान्तस्य विविधाः भेदाः सन्ति। यथा-द्वैतवेदान्तः, अद्वैतवेदान्तः, विशिष्टाद्वैतवेदान्तः इत्यादयः। सदानन्दयोगीन्द्रप्रणीते वेदान्तसारे वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारिणि शारीरकसूत्रादीनि[3] चेति वचनं लभ्यते। तत्र वेदान्ते ब्रह्मसम्बन्धिनी आलोचना वर्त्तते। अज्ञानादिना अविद्यायुक्तत्वेन जीवः स्वस्वरूपं अनवाप्य अज्ञानावच्छिन्नचैतन्यरूपेण तिष्ठति। महावाक्यादिज्ञानपुरस्सरं यदा निरन्तराभ्यासेन जीवस्य स्वस्वरूपं ज्ञानं भवति तदा सः मुक्तः सन् पश्यन्नपि न पश्यति सुसुप्तवत् तिष्ठति तदा सः जीवन्मुक्तः पुरुषः मुक्तिं लभते। अद्वैतवेदान्तस्य भाष्यकारेण श्रीकृष्णब्रह्मानन्देन समाधिदीपिका प्रणीता। समाधिदीपिकायाः पुष्पिकायां लिखितमस्ति-

**इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालगोपालकृष्णसरस्वतीशिष्यकृष्णब्रह्मानन्दविरचिता समाधिदीपिका समाप्ता।।**[4]

**मातृकाशास्त्रम् (Manuscript)**

मातृका (Manuscript) इत्यस्य पर्यायपदत्वेन, पाण्डुलिपिः, पाण्डुपत्रम्, पाण्डुरपत्रम्, ताडकोशः इत्यादिशब्दाः प्रयुज्यन्ते। "Manu" शब्दस्यार्थः 'हस्त', "Script" इति 'लेखनम्'। अर्थात् हस्तलेखशास्त्रमिति। मनुष्यलेखमधिकृत्य प्रवर्तितं शास्त्रं मातृकाशास्त्रम्, हस्तलेखशास्त्रम् इत्यादिपदैरभिधीयते। अनेन प्रकाशितपुस्तकानां

ग्रन्थानामप्रकाशितहस्तलेखरूपेण विद्यमानानाञ्च भेदः सुस्पष्टः प्रकाशितग्रन्थो हस्तेन लिखितो न विद्यते, अपि तु यन्त्रनिर्मितः समानरूपेण विद्यते। प्राचीनमध्ययुगीनसमययोराधुनिककाल इव ग्रन्थानां प्रकाशनव्यवस्था, यन्त्रद्वारानिर्मिता, तत्प्रसारश्च यदा नासीत्, तदा स्वकीयग्रन्थप्रसारप्रचारार्थं कर्त्ता लिखितस्य प्रथमादर्शस्य नैकाः प्रतिकृतयो लेखका लेखनिकाः कुर्वन्ति स्म। एतादृशाः लेखका ग्रन्थानां प्रतिलिपिकरणे व्यस्ता आसन्। पाण्डुलिपिशब्देऽपि पाण्डुशब्देन प्रथमलेखकरूपेण शुद्धाशुद्धमिश्रितं लेखरूपं विषय व्यज्यते। यथा व्यासेन कथितं–

**पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत्।**
**न्यूनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत्॥**

गुरुदेवः अर्थात् आध्यात्मिकगुरुः इति नाम्ना परिचितः स्वामिब्रह्मानन्दसरस्वती भारतस्य ज्योतिरमठः इति मठस्य शंकराचार्यः आसीत्। एकस्मिन् ब्राह्मणपरिवारे सः जनिं लब्धवान्। नवमे वर्षे सः आध्यात्मिकगुरोः अनुसन्धित्सुः गृहं त्यक्तवान्। यदा सः चतुर्दशवर्षीयः जातः तदा सः स्वामिकृष्णानन्दस्य सरस्वतिनः शिष्यत्वम् अग्राहयत्। चतुस्त्रिंशत् यदा तस्य वयः जातं तदा सः सन्यासधर्मं दीक्षितवान्। ततः सप्ततिहायने 1941तमे वर्षे ज्योतिरमठस्य शंकराचार्यः अभूत्। तस्य शिष्येषु स्वामिशान्तानन्दसरस्वती ट्रान्सेन्डेटालमेडिटेशन (Transcendental Meditation) इत्यस्य प्रतिष्ठाता आसीत्। अन्ये महर्षिः महेशः योगी, स्वामिस्वरूपानन्दसरस्वती, स्वामिकार्पात्री इति इमे शिष्याः तस्य आसन्। शान्तानन्दस्वामिनां पक्षपातिनां मतानुसारं ब्रह्मानन्दस्वामिपादः 1953 वर्षे तस्य पञ्चत्वं प्राप्तेः पञ्चवर्षाद् प्रागेव स्वत्वं (deed of will) निर्मितवान्। तत्र सः शान्तानन्दमेव तस्य उत्तरसूरित्वेन नामकरणं कृतवान्।

| | |
|---|---|
| **स्वामीब्रह्मानन्दसरस्वती** | |
| **वैयक्तिगतम्** | |
| जन्म | राजाराममिश्रः, 21 दिसेम्बरः 1871<br>सुरहुरपुरम् अयोध्यायाः समीपे, उत्तरपश्चिमप्रदेशः ब्रिटिशभारतम् (वर्तमानः उत्तरप्रदेशः, भारतम्) |
| मृत्युः | 20 मेमासः, 1953 ( 81 वयांसि) कोलकाता, पश्चिमवङ्गः, भारतम् |
| धर्मः | हिन्दुः |
| दर्शनम् | अद्वैतवेदान्तः |
| गुरुः | स्वामीकृष्णानन्दसरस्वती |
| शिष्याः | स्वामी कार्पात्री, शान्तानन्दसरस्वती, महर्षिमहेशयोगी, स्वरूपानन्दसरसर्वती |
| आचार्यः | ज्योतिरमठस्य शङ्कराचार्यः |

* तस्य पवित्रता

* गुरुदेवः ( अर्थात् ऐश्वरिकशिक्षकः)

* महाराजः

**प्रारम्भिकजीवनम्–**

प्रभु: परममहर्षिणा गुरुदेव: इति नाम्ना सम्बोधितवान्। एवं चटि–एम् इति आन्दोलनकाले भारतस्य उत्तरप्रदेशराज्ये अयोध्याया: समीपं सुरहुरपुर–जिलायाम् आम्बेडकरनगरे एकस्मिन्मिश्रपरिवारे अयं जनिं लब्धवान्। तस्य जन्म कश्चन समृद्धपरिवारे ब्राह्मणपरिवारे जातम्। बाल्ये वयसि तस्य राजाराम: इति नाम आसीत् अपि च स: महायोगीराज: इति नाम्नापि परिचित: आसीत्। यदा तस्य वय: सप्तमवर्ष:, तदा तस्य पितामह: पञ्चत्वं प्राप्तवान्। एतत्तस्य मनसि प्रभावं विस्तृतवान्। नवमवर्षे आध्यात्मिकमार्गे अग्रे सरणार्थं कमपि अनुक्त्वा एव गृहं परित्यक्तवान्। किन्तु शीघ्रमेव कश्चन आरक्षक: तम् उद्धार्य तस्य पितु: समीपं नीतवान्। गृहं गत्वा पितु: मातु: च समीपं गत्वा गृहपरित्यागं कृत्वा निर्जने स्थित्वा नवीनं जीवनम् आरभे इति प्रार्थितवान्। किन्तु तस्य पितु: इच्छा आसीत् यद् स: विवाहं कुर्यात् एवं च गृहस्थो भूत्वा गृहकार्यं सम्पादयेत्। तदर्थं तौ परिवारस्य गुरुं प्रति अनुरुद्धवन्तौ यत् स: तं वदेत् गहकार्यादिषु लग्न: भवतु इति। किन्तु स: तस्य प्रज्ञया आध्यात्मिकविवर्तनं च अवलोक्य एवं मुग्ध: जात: यत्सकाम अपि प्रचेष्टाम् एव न कृतवान् येन तस्य मनसि परिवर्तनं स्यात्। तदा तस्य पितापि अनुमन्यत। दिनद्वयात्परं राजाराम: आनुष्ठानिकतया गृहस्थं जीवनं परित्यज्य हिमालये निर्जनताया: सन्धानं कृत्वा बाल्यगृहं त्यक्तवान्। राजाराम: पद्भ्याम् अटन्हरिद्वारनगरं प्रति गतवान् तत: स: हिमालयस्य प्रवेशद्वारम् ऋषिकेशं जगाम। अत्र स: सद्गुरो: उपयुक्तगुरो: आध्यात्मिकगुरो: वा अनुसन्धानं प्रारब्धवान्। राजाराम: बहुभि: ज्ञानिभि: ऋषिभि: सह साक्षात्कारं कृतवान् किन्तु तेषु न कश्चन तस्य आजीवनं ब्रह्मचर्यस्य विषये एवं च वेदस्य अन्तरङ्गज्ञानस्य तस्य अभिज्ञताया: प्रयोजनीयताया: पूरणं नाकार्षीत्।

पञ्चवर्षात्परं चतुर्दशे वयसि उत्तरकाश्या: एकस्मिन् ग्रामे राजाराम: तस्य मनोनीतं प्रभुं बह्वन्वेषणात्परं प्राप्तवान् एवं स्वामिकृष्णानन्दस्वरस्वतिन: शिष्यत्वं गृहीतवान्। तदा तस्य राजारामस्य ब्रह्मचैतन्यब्रह्मचारी इति नामकरणं जातम्। तत: स: तस्य प्रभो: आश्रमे प्रिय: शिष्य: जात: एवं प्रभो: निर्देशानुसारं स: समीपस्थे कस्यांश्चित् गुहायाम् अवसरं स्वीकृतवान्। गुहात: स: प्रति सप्ताहं केवलम् एकवारं तस्य गुरो: दर्शनार्थं गच्छति स्म। राजारामस्य यौवनत्यागस्य कथा शंकराचार्यस्य जीवनस्य प्रतिध्वनिवद् इति कथ्यते। सोऽपि यदा अष्टमवर्षीय: आसीत्तदा गृहं त्यक्त्वा त्यागी जीवनं प्रारब्धवान्।

**प्रौढवयसि तस्य जीवनम्–**

पञ्चविंशवयसि स: स्वामिब्रह्मानन्दसरस्वती तस्य गुहाया: बहिरागत्य स्थायीरूपेण गुरूणा सह योगदानं कृतवान्। चतुस्त्रिंशद्वर्षीये वयसि स: कुम्भमेला इति नाम्ना भारतीयमहोत्सवोद्यापने गुरुणा सन्न्यासधर्मं दीक्षितवान्। तदा स: तपस्वी आदेशे नियुक्त: अभवत् एवं च आनुष्ठानिकतया स्वामिब्रह्मानन्दसरस्वती इति नाम प्राप्तवान्। मध्ययुगीयस्य दशनामीसम्पदायस्य सन्न्यासिन: सरस्वतीशाखाया:। यावत्कालं स: अजीवत्तेषु कश्चन बृहदंश: स: निर्जनतायां व्यतीतवान्। स: मध्यभारते कांचन गुहां निर्मितवान् यत्र स: चत्वारिंशद्वर्षं स्थितवान् इति श्रूयते।

1941 तमे वर्षे सप्ततिहायने विंशतिवर्षं व्याप्य तम् अनुरुन्धवान् तत: स: ब्रह्मानन्द: ज्योतिरमठस्य जगद्गुरो: शंकराचार्यस्य पदं गृहीतवान्। तत्चस्थानं सार्धशतवर्षप्रयन्तं शून्यम् आसीत्। तस्य शिष्यस्यस्वामिन: कारपात्रिण: मतानुसारम् एवं ज्ञायते यद्ब्रह्मानन्दं स: अनुरोधं कृतवान् पदम् अलंकुर्वन्तु इति। ब्रह्मानन्द: तस्य अनुरोधं श्रुत्वा उक्तवान् यत्–वनेषु विचारणं क्रियमाणम् अरण्यराजं सिंहं यदि शृङ्खलेषु निबन्धनं कर्तुं भवान् इच्छति। तथापि यदि भवान् इच्छति अहं भवद्वचनं मत्वा मठस्य अस्य दायित्वं नेष्यामि तर्हि तदर्थं सिद्ध: अहम्। दायित्वं च गृहीत्वा तमुद्दिश्य यथायथं कार्यं सम्पादयामि यद् कार्यं च आदिशंकराचार्य: पूर्वं कर्तुमुद्युक्त: आसीत्। स्वामिन: ब्रह्मानन्दस्य शंकराचार्यरूपेण नियोग: वाराणस्यां स्थितै: कैश्चित् सन्न्यासिभि: पण्डितै: च एप्रिलमासस्य प्रथमे दिनाङ्के 1941 तमे

वर्षे अभूत्। स्वामिभारतीकृष्णतीर्थः, पुर्यः शंकराचार्यः, स्वामिचन्द्रशेखरभारती, शृङ्गेर्यः शंकराचार्यः इत्येते प्रतिष्ठानस्य सम्मानितसमर्थकरूपेण पुनः गाडोयालनगरस्य वाराणसीनगर्यः दारभांगेति नगरस्य शासकाः अपि समर्थकरूपेण विरोधिनः तस्य विरोधं यथा न कुर्युः तदर्थं साहाय्यं कृतवन्तः। वैदिकग्रन्थेषु उल्लिखितयोग्यतायाः मूर्तप्रतीकत्वेन ब्रह्मानन्दः स्थानं प्राप्तवान्। एतद् तस्य सप्ततिवर्षं यावत् शङ्कराचार्यपदे तस्य निरवच्छिन्नारोहणे सहायताम् अकरोत्। सः त्रयोदशाधिकवर्षं यावत् सेवां कृतवान्।

ज्योतिर्मठे मन्दिराणां प्रतिष्ठानानां च पुनर्गठनार्थं तं शंकराचार्यं स्वामिब्रह्मानन्दं प्रति अभियोगम् अकरोत्। स्थानीय-जिलाप्रशासकानांतैः च निर्वाचितानां दलैः साहाय्यं गृहीत्वा मठस्य भूमिं स्थानीयैः कृषकैः यद् अधिकृतम् आसीत्सः तत्सर्वं पुनः उद्धारं कृतवान्। तस्य नेतृत्वे द्वितलविशिष्टस्य त्रिंशत्कक्षायुक्तस्य आलयस्य निर्माणं जातम्। नवीनमठस्य पुरतः शताङ्गणदूरे पूर्णगिरिदेव्याः मन्दिरनिर्माणकार्यस्य तत्त्वावधानम् अकार्षीत्। तत् च कार्यं तस्य मृत्योः प्रागेव दरभङ्गायाः शासकः प्रारब्धवान्। सरस्वतिनः नेतृत्वे ज्योतिरमठं यथा उत्तरभारते अद्वैतशिक्षायाः ऐतिह्यावहतां गुरुत्वपूर्णतां यथा आधत्ते तदर्थम् अस्य पुनः प्रतिष्ठायै महती भूमिका वर्तते। भगवतः शंकराचार्यस्य शिक्षायाः यथायथं पुनः प्रतिष्ठा यथा स्यात् तदर्थं वक्तृता तेन प्रदत्ता। वक्तृतार्थं शंकराचार्यरूपेण उत्तरभारतं परिभ्रमणं कृत्वा अधिकं कालं सः कृतवान्।

ब्रह्मानन्दस्य शिष्यस्य महर्षेः महेशयोगिनः मतानुसारं तस्य ब्रह्मानन्दस्य भक्ताः अनुभूतवन्तः यद् तस्य पवित्रता अभिव्यक्तिः व्यक्तित्वपूर्णस्य ऐश्वरिकशक्तेः यथायथं वर्णयितुम् अशक्याः, अतः तस्य एवं नवीना अनुभूतिः तस्य देवत्वम् आसीत् इति एवं रूपेण व्यवहारः प्राप्यते। प्राचीनत्वस्य अभिव्यक्तेः गौरवम् अतिक्रान्त्य गुरुदेवस्य पुत्रः नाम, औपनिषदिकवास्तवतायाः जीवन्ताभिव्यक्तिः, अतीन्द्रियस्य देवत्वस्य मूर्तप्रतीकः ब्रह्मानन्दः भारतस्य राष्ट्रपतिना राजेन्द्रप्रसादेन परिदर्शितः एवं च दार्शनिकसर्वपल्ली-राधाकृष्णन् यः भारतस्य राष्ट्रपतिरूपेण परं स्थलाभिषिक्तः जातः सः 1950 तमे वर्षे राष्ट्रपतिः राधाकृष्णन्तस्य परमां पवित्रतां वेदान्तावतारः सत्यस्य मूर्तप्रतीकत्वेन च तं सम्वोधितवान् इति श्रूयते।

शंकराचार्यस्य स्वामिब्रह्मानन्दसरस्वतिनः शिष्येषु उल्लेख्याः केचन स्वामिशान्तानन्दसरस्वती, टि-एम प्रतिष्ठाता महर्षिः महेशयोगी, स्वामिस्वरूपानन्दसरस्वती, एवं च स्वामिकर्पात्री

ब्रह्मानन्दस्वामिपादः 1953 वर्षे तस्य पञ्चत्वं प्राप्तवान्। ततः पञ्चवर्षाद् प्रागेव स्वत्वं (deed of will) निर्मितवान्। तत्र सः शान्तानन्दमेव ज्योतिरमठस्य शंकराचार्यरूपेण उत्तरसूरित्वेन तस्य नामकरणं कृतवान्।

**उत्तराधिकारः**

स्वामिपादः विरलः तेषु सिद्धव्यक्तिषु येषां पार्श्वे श्रीविद्यायाः ज्ञानम् आसीत्। तस्य स्थानं च शंकराचार्यस्य परमेवासीत् अतः महतः दार्शनिकस्य शंकराचार्यस्य सः प्रतिरूपः इति तस्य प्रसिद्धिः। शंकराचार्यभवनात् एकशतकाभ्यान्तरे एव तेन सहस्रशः शिष्याः संगृहीताः। ततः परम् अद्वैतवेदान्तदर्शनस्य गुरुत्वपूर्णकेन्द्ररूपेण ज्योतिरमठं संस्थापितवान्। 1979 तमे वर्षे विधानमण्डलस्य न्यायालये तेन दृष्टं यद्वालनाकभिः योगीटि-एम्शिक्षकाः तेषां छात्रेभ्यः मन्त्रप्रदानात् पूर्वमेव अनुष्ठानकाले देवीकृतगुरुदेवम् अर्घ्यदिकं प्रणामादिकं निवेदयन्तः सन्ति। यद्वा भवतु महर्षेः महेशयोगिनः व्यक्तिः महाजागतिकं वर्तते। जीवनस्य स्वतन्त्रसम्भाव्यतामहाजागतिकसम्भाव्यता भवति। व्यक्तिः आभ्यन्त्यरिकतया ऐश्वरिकः वर्तते। अतीन्द्रियज्ञानं मनुष्येषु ऐश्वरिकभावनायाः जागरणं करोति, देवत्वे यापनं मनुष्याणाम् अधिकारो वर्तते। 2008 तमे वर्षे महर्षिः महेशः योगी 30000 संख्यकानां भारतीयपण्डितानां समर्थये न्यासनिधिं संस्थापितवान्। तस्य निधेः नामकरणं ब्रह्मानन्दस्य नामानुसारं सः अकरोत्।

गुरुदेवः ध्यानाभ्यासस्य कृते कंचन अनुशीलनं प्रतिष्ठापितवान्। यच्च दैनन्दिनकार्येषु गृहस्थानां कृते उपयोगी आसीत्। महर्षिः महेशयोगी इमं विषयं विश्वस्मिन् विश्वे व्याप्तवान्।

## अन्त्यटीकाः

1. प्राप्तिस्थानम्- Asiatic Society(Kolkata) & Mysore (Karnatak)
2. मनुस्मृतिः 2/168
3. वेदान्तसारः, पृष्ठाङ्कः 1
4. समाधिदीपिका-पुष्पिका

## ग्रन्थसूची

* भट्टाचार्य, समरेन्द्र, मनुसंहिता, कलकाता ⁼ वुक सिण्डिकेट, 2005।
* भारतीय दर्शन कोष (प्राचीन न्याय, नव्य न्याय ओ वैशेषिक दर्शन), कलकाता-संस्कृत कलेज, 1978।
* योगीन्द्र, सदानन्द, वेदान्तसार, विपदभञ्जन पाल (सम्पा.), कलिकाता-संस्कृत पुस्तक भाण्डार, 1413।
* योगीन्द्र, सदानन्द, वेदान्तसार, स्वामी अमृतात्त्वानन्द (अनुवाद, व्याख्या), कलकाता-उद्बोधन कार्यालय, 1998।
* रामानुजाचार्य, वेदान्ततत्त्वसार, भक्ति सिद्धान्त सरस्वती (सम्पा.), कलिकाता-गौडीर मठ, 1972।
* राय, यज्ञेश्वर ओ घोष, बाहादुर (सम्पा.), पातञ्जल योगदर्शन, कलकाता-पश्चिमबङ्ग राज्य पुस्तक पर्षद, 2002।
* विद्यारण्य, पञ्चदशी, स्वामी वाणेशानन्द (सम्पा.), कलकाता-उद्बोधन कार्य्यालय, 2005।
* स्वामी गम्भीरानन्द, उपनिषद् ग्रन्थावली (बृहदारण्यकोपनिषत्), कलिकाता-उद्बोधन कार्यालय, 2000।

## Resources

1. www.archive.com
2. www.ndl.iitkgp.ac.in
3. www.sanskritbooks.org
4. www.shodhaganga.com
5. www.sanskritlibrary.com
6. www.sanskritlinks.blogspot.in

*शोधछात्रः ,*

*केन्द्रीयसंस्कृतविश्वविद्यालयः श्रीसदाशिवपरिसरः, पुरी, ओडिशा।*

ISSN 2582-2608

# ईशावास्योपनिषदि उक्तस्य आत्मतत्त्वस्य भगवद्गीतायाम् अनुशीलनम्

साबाना खातुन

*शोधसारः-*

*ईशावास्योपनिषदि उक्तात्मतत्त्वस्य भगवद्गीतायाम् अनुशीलनम् नाम अस्य शोधपत्रिकायाः भूमिकायाम् उपनिषदः परिचयः श्रीमद्भगवद्गीतायाः परिचयः च संक्षिप्तरूपेण अस्ति। तदनन्तरम् ईशोपनिषदि उक्त आत्मतत्वस्य विवरणमस्ति। ईशोपनिषदि उक्त आत्मतत्वस्य वर्णनानन्तरं भगवद्गीतायाम् अस्य आत्मतत्वस्य अनुशीलनमस्ति। ईशावास्योपनिषदि उक्त आत्मतत्वविषयकमन्त्रेण सह सादृश्यमूलकमन्त्रः भगवद्गीतायामपि अस्ति। तेषां सर्वेषां सर्वाणि मन्त्राणां व्याख्या अस्मिन् शोधपत्रिकायाः मुख्यविषयः।*

**भूमिका**- समस्तवेदवाङ्मयस्य सारभूतो भागः उपनिषदः इति विदुषां मतम्। उपनिषत् वाङ्मयमस्य वेदान्तः इत्यपरं नामधेयम्। उपनिषदः एव दर्शनप्रकाराणां मूलस्रोतांसि। ता अध्यात्मिकसरांसि च। ताभ्यः प्रवहन्य ज्ञानपरम्पराः मानवस्य अभ्युदयाय निःश्रेयसे च बद्धादराः सन्ति। भारतीयपरम्परासु वैदिकमार्गानुयायिनामपेक्षितं पुरुषार्थमयजीवनमुपदिशत् ग्रन्थत्रयं प्रस्थानत्रयं विलसति। निवृत्तिमार्गान् विवृण्वन्त्यः एताः उपनिषदः मोक्षसाधनोपायानपि सम्यक् निरूपयन्ति। उपनिषदः, भगवद्गीता, ब्रह्मसूत्रं चेति प्रस्थानत्रयम्। भारतीयदर्शनशास्त्राणामुपजीव्येषु ग्रन्थेषु उपनिषदः प्रधानाः भवन्ति। सर्वासामुपनिषदां सारः भगवद्गीता इति प्रसिद्धा एव। ब्रह्मसूत्राणि शारीरकसूत्राणीति च प्रथितानि। उपनिषदः भगवद्गीताब्रह्मसूत्रयोः मूलमित्येतत् तासां महत्वमभिव्यनक्ति। मतत्रयप्रधानाचार्यैः इमान्येव उपनिषद्वाक्यानि स्वस्वसिद्धान्तानुगुण्येन व्याख्यातानीत्येतत् उपनिषद्वाक्यानां गाम्भीर्यं द्योतयति। आत्मविचारस्तु विस्तृतरूपेण उपनिषत्सु लभ्यते।

उपनिषदः वेदान्तशब्देनापि अभिधीयन्ते। वेदानाम् अन्तः वेदशीर्षाणि इति। वस्तुतस्तु वेदानाम् अन्तः नाम निर्णयः इति उपनिषन्निर्वचनं श्रूयते। उपनिषत्सु निवृत्तिधर्मः प्राधान्येन बोध्यते। मोक्षसाधनं ब्रह्मज्ञानम् इति उपनिषत्सु एव प्रतिपाद्यते। उपनिषत्सु ब्रह्मस्वरुपं जीवब्रह्मैक्यं मोक्षसाधनं ब्रह्मज्ञानम् इत्येव तात्पर्येण प्रतिपाद्यते। एतादृशाः ब्रह्मप्रतिपादनपराः उपनिषदः तदानुगुण्येन इतरानपि विषयान् प्रतिपादयन्ति। यद्यपि अष्टोत्तरशतम् उपनिषदः परिगणिताः तथापि विषयप्राधान्यमनुसृत्य ईशादिबृहदारण्यकान्ताः दशोपनिषदः प्राधान्येन विद्वद्भिः परिगणिताः।

**ईशावास्योपनिषदि उक्तस्य आत्मतत्त्वस्य विवरणम्-**

उपनिषत्सु सर्वाधिकं प्राचीनमेव महत्वपूर्णम् ईशावास्योपनिषद् यजुर्वेदस्य माध्यन्दिनशाखान्तर्गतः चत्वारिंशतमोऽध्यायो वर्तन्ते। अष्टादशसु मन्त्रेषु निबद्धायां ईशावास्योपनिषदि कर्मसन्न्यासात् अपसृत्य कर्मोपासनायाः सरलशैल्या मार्मिकं विवेचनमस्ति। अत्र परमब्रह्म-परमात्मनः स्वरूपविवेचनेन सह विद्या-अविद्याविषये संक्षेपेण प्रभावपूर्णभाषायां प्रकाशः प्रक्षिप्तोऽस्ति। ईशावास्योपनिषदि त्रिषु मन्त्रेषु आत्मनः तत्त्वं प्रपञ्चितम्। यथा-

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत्।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति।।**[1]

मुमुक्षुभिः यद् ब्रह्मोपास्यं तस्य स्वरूपं वर्ण्यते-तद् ब्रह्म निश्चलं वर्तते, एकमेवास्ति, अतिचञ्चलान्मनसोऽपि वेगवत्तरं विद्यते, अनादि व्यापकञ्चास्ति। तत् देवा न विदुः। तत् स्वयं तिष्ठदपि द्रुतं गच्छतः अन्यान्कालवायवादीनतिक्रम्य गच्छतीव। तस्मिन् देहान्तर्गतो वायुः प्राणनादिचेष्टान् धारयति।

अनेजत् न एजत्। एजृ कम्पने, कम्पनं चलनं स्वावस्थाप्रच्युतिस्त-द्वर्जितं सर्वदैकरूपमित्यर्थः। तच्चैकं सर्वभूतेषु मनसः सङ्कल्पादि-लक्षणात् जवीयो जववत्तरम्।

सर्वकालसर्वावस्थासु एकरूपमेव ब्रह्म, ज्ञानेन्द्रियाणि ब्रह्म ज्ञातुं न शक्नुवन्ति, सर्वव्याप्तं ब्रह्म इत्यादि ब्रह्मस्वरूपलक्षणान्युक्तानि। द्योतनात् देवा इत्यतः देवशब्देन चक्षुरादीन्द्रियाण्युक्तानि। आत्मा तु वागिन्द्रियप्रभृतीन् आत्मविलक्षणान् अतीत्य वर्तते। भीषास्माद्वातः पवते सर्वस्य जगतः धारयिता मातरिश्वा अपि ब्रह्मणः प्रभावेन एव प्राणिकर्माणि विदधाति। सर्वा हि कार्यकारणादिविक्रिया नित्यचैतन्या-त्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीत्यर्थः।

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके।**
**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः।।**[2]

तदात्मतत्त्वं यत्प्रकृतं तदेजति चलति, तदेव च नैजति स्वतो नैव चलति स्वतोऽचलमेव सत् चलतीवेत्यर्थः। किञ्च तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वात् दूर इव। तत् उ अन्तिके इति च्छेदः। तद्वन्तिके समीपेऽत्यन्तमेव विदुषामात्मत्वान्न केवलं दूरेऽन्तिके च- तदन्तरभ्यन्तरेऽस्य सर्वस्य, **य आत्मा सर्वान्तर**[3] इति श्रुतेः। अस्य सर्वस्य जगतो नामरूपक्रिया-त्मकस्य तदु अपि सर्वस्य अस्य बाह्यतो व्यापकत्वादाकाशवन्निरतिशयसूक्ष्मत्वात् अन्तः। प्रज्ञानघन एव इति च शासनाभिरन्तरं च।

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।**
**कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः।।**[4]

स यथोक्त आत्मा पर्यगात् परि समन्तादगाद्गतवानाकाशवद्व्यापी इत्यर्थः। शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थः। अकायमशरीरो लिङ्गशरीरवर्जित इत्यर्थः। अव्रणम् अक्षतम्।

अस्नाविरं स्नावाः शिरा यस्मिन्न विद्यन्त इत्यस्नाविरम्। अव्रणमस्ना-विरमित्याभ्यां स्थूलशरीरप्रतिषेधः। अपापविद्धं धर्माधर्मादिपापवर्जितम्। शुक्रमित्यादीनि वचांसि पुल्लिङ्गत्वेन परिणेयानि। स पर्यगादित्युपक्रम्य कविर्मनीषीत्यादिना पुल्लिङ्गत्वेनोपसंहारात्। कविः क्रान्तदर्शी सर्वदृक्। नान्यतोऽस्ति द्रष्टा इत्यादिश्रुतेः। मनीषी मनस ईषिता सर्वज्ञ ईश्वर इत्यर्थः। परिभूः सर्वेषां पर्युपरि भवतीति परिभूः। स्वयम्भूः स्वयमेव भवतीति येषमुपरि भवति यश्चोपरि भवति स सर्वः स्वयमेव भवतीति स्वयम्भूः। आत्मचैतन्यस्य सर्वव्यापित्वं, ज्योतिष्मत्वं, लिङ्गशरीरवर्जितत्वम् इत्यादिलक्षणान्युक्तानि।

एवं रूपेण ईशावास्योपनिषदि आत्मतत्त्वं निरूपितमस्ति। चतुर्थ-पञ्चम-मन्त्रयोः परमात्मनः सार्वभौमिकं सर्वव्यापकञ्च स्वरूपम्, अष्टमे मन्त्रे च परमात्मप्राप्तेः फलम् वर्णितमस्ति।

**श्रीमद्भगवद्गीतायाम् आत्मतत्त्वस्य विवरणम्-**

उपनिषत्कालानन्तरं वैदिकसंस्कृतेर्विरोधिनां प्राबल्यं सञ्जातम्। अतः भारतीयदार्शनिकचिन्तनेऽपि तेषां भारतीयसंस्कृतिविरोधिनाम् आक्षेपा अभुवन्। महाभारतकाले वैदिकसंस्कृतेः संरक्षरणस्य महती आवश्यकता आसीत्। अतएव महर्षिणा वेदव्यासेन स्वीकृतौ महाभारते उपनिषदां गूढतत्त्वानां सरलतमं स्वरूपम् उपस्थापितम्। कुरुक्षेत्रयुद्धे अर्जुनः स्वजनानां मृत्योरपि बिभेति स्म, स्वप्राणेष्वपि तस्य आसक्तिरासीत् । स युद्धात् विरतो बभूवः। भगवान् श्रीकृष्णः अर्जुनस्यैतां समस्यां समाधातुं यान् विचारान् प्रस्तुतवान् तेषां संग्रहात्मकभागः श्रीमद्भगवद्गीता नाम्ना अतिशयं सम्मानं महत्वपूर्णस्थानं च प्राप्तवान्। अस्मिन् भागे गूढम् आत्मज्ञानं सृष्टिरहस्यं धर्माधर्मविचारञ्च संकलिताः सन्ति। आत्मनो नित्यतया, जगतः अनित्यतया, कर्मणः स्वरूपादिविश्लेषणपूर्वकोपदेशेन च अर्जुनस्य व्यामोहो भग्नः।

विषादग्रस्थस्य शरणागतस्य अर्जुनस्य मोहावस्थातः समुद्धारणार्थं स्वधर्मपालनपूर्वकं आत्मनः अविनाशित्वं तथा स्थूलशरीराणां क्षणस्थायित्वं प्रतिपादितम्। भगवता श्रीकृष्णेन प्रथमतः त्रिंशत् श्लोकात् यावत् आत्मतत्त्वस्य विस्तृतव्याख्या कृता। अनन्तरं आत्मा नित्यः, तस्य नाशो न भवति, केवलं अवस्थान्तरीभूतो भवति, इति उपदेशेन श्रीकृष्णेन अर्जुनस्य विषादमोचनं कृतम्।

श्रीमद्भगवद्गीतायाम् आत्मनः सगुण-निर्गुण-रूपेण प्रतिपादनं कृतम्। गीताया अधोलिखितश्लोक एतदर्थम् उदाहर्तुं शक्यते इति,-

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च।।**[5]

गीतोक्तमतानुसारेण आत्मैव इन्द्रियवृत्तिभिः लौकिकविषयाणाम् उपलब्धौ समर्थं भवति। अन्तरिन्द्रियाणां बहिरिन्द्रियाणां च व्यापारैः प्रतिभाषितमपि दृश्यते। अथ च तत् स्वयं सर्वेन्द्रियेभ्यो विहीनं, सर्वविधदेहादिसम्बन्धेभ्यो रहितस्य वर्तते। तत् अखिलं जगत् आदधाति। तत्र निर्गुणमस्ति तथापि गुणानां भोक्ताऽस्ति। सत्त्वादिगुणानां परिणामभूतानां शब्दस्पर्शरूपादिविषयाणाम् उपभोक्ताऽपि भवति। तत् सत् अस्ति असच्चाप्यस्ति उभयोः परेऽस्ति। तद् भूतानां बहिरन्तश्च विद्यते। तच्चरम् अचरं दूरस्थम् आन्तिकस्थं चास्ति।

ईशावास्योपनिषदि उक्तम् आत्मतत्त्वं श्रीमद्भगवद्गीतायाम् एवं घोषयति भगवान्नाचार्यः श्रीकृष्णः–

**बहिरन्तश्च भूतानाम् अचरं चरमेव च।**
**सूक्ष्मत्वात तदविज्ञेयं दूरस्थं चान्तिके च तत्।।**[6]

इतोऽपि ज्ञेयं ब्रह्म विभाव्यते बहिरिति। भूतानां प्राणिनां, बहिरन्तश्च देहाद् बहिस्तद् ब्रह्म विद्यते। भूतेभ्यो बहिर्बाह्यविषयादिरूपेण ब्रह्म विद्यते इत्यर्थः। भूतानाम् अन्तश्च ब्रह्म विद्यते प्रत्यगात्मभूतमित्यर्थः। 'बहिस्त्वक्पर्यन्तं देहम् आत्मत्वेन अविद्याकल्पितम् अपेक्ष्य तमेव अवधिं कृत्वा बहिरुच्यते। तथा प्रत्यगात्मानम् अपेक्ष्य देहमेवावधिं कृत्वा अन्तरुच्यते।' इति भाष्यम्। बहिरन्तश्च इत्युक्ते मध्ये अभावे प्राप्ते इदमुच्यते–अचरं चरमेव चेति। बहिर्विद्यमानान्तर्विद्यमानयोर्मध्ये च यच्चराचरं जङ्गमस्थावरदेहाभासं तदपि तदेव ज्ञेयं ब्रह्मास्तीति संबन्धः। विषयादिरूपेण बहिर्विद्यमानस्य ब्रह्मणः प्रत्यगात्मरूपेणान्त–र्विद्यमानस्य च ब्रह्मणो मध्ये च यद् भूतं नानाविधदेहात्मना भासमानं तदपि ज्ञेयं तत्त्वं स एवेत्यर्थः। यथा रज्जुः सर्पाभासः। ननु यदि अचरं चरमेव च व्यवहारविषयं सर्वं ज्ञेयं ब्रह्मैवास्ति किमिति सर्वैर्ब्रह्मेति न विज्ञायते इत्यत उच्यते–सूक्ष्मत्वादिति। सत्यम्। दूरस्थम् अविज्ञाततया अविदुषां वर्षकोट्यापि अप्राप्यत्वाद् दूरस्थम्। आन्तिके च तद् विदुषाम् आत्मत्वादिति समीपं च ब्रह्म। 'सूक्ष्मत्वम् अतीन्द्रियत्वम्'–इत्यानन्दगिरिः।। तथा च मन्त्रः–**तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्वस्य तदु सर्वास्यास्य बाह्यतः**[7]।। इति।।

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।।**

यः समाहितान्तःकरणः सिद्धः, मां वासुदेवं सर्वस्यात्मानं, सर्वत्र सर्वेषु भूतेषु आत्मरूपेण स्थितं पश्यति साक्षात्करोति। सर्वञ्च किञ्च सर्वं ब्रह्मादिस्तम्बपर्यन्तं भूतजातम् मयि वासुदेवे अधिष्ठाने स्थितम् आरोपितं पश्यति साक्षात्करोति। तस्य एवम् आत्मैकत्वदर्शिनः सिद्धस्य अहम् ईश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि। स च विद्वान् मे मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति। तस्य मम चैकत्वात्। सर्वात्मैक्यदर्शी मदभिन्नोऽस्तीत्यर्थः। अत्र भाष्ये–''तस्य च मम चैकात्मकत्वात्। स्वात्मा हि नाम आत्मनः प्रिय एव भवति। यस्माच्च अतएव सर्वात्मैक्यदर्शी।'' इत्युक्तम् ।।

पुनरपि– **सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते।।**[8]

सर्वेति। सर्वथा सर्वप्रकारैर्वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते, नित्यमुक्त एव स, न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः। ईशावास्योपनिषदि उक्तं– ''तदन्तरस्य सर्वस्य'', ''सर्वस्याऽस्य बाह्यतः'' इत्युभयत्रापि एक एव सः आत्मा सर्वान्तर्यामीति सर्वस्य हृदि वर्तते। दहराकाशवर्त्ती सन् अन्तरं यमयति। एवं सोऽयमेक एव बाह्यतोऽपि व्यापकत्वात् आकाशादिवद् प्रकाशत इत्यर्थः। तथा हि भगवदुक्तिः–

**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृत् वेदविदेव चाहम्।।**[9]

तथा च 'यो वै सोऽन्तः पुरुष आकाशः' इत्यादिना कथनेन 'एष त आत्मा सर्वान्तरः' इत्यमुना श्रुतिवचनेन तु सर्वस्य जगतः चराचरस्य प्राणिमात्रस्य चिदेकरसरूपेण वर्त्तमानोऽयमात्मान्तर्यामीति ज्ञायते। किं ननु ''योस्यमन्तर्हृदय आकाशः'' इति श्रुत्यन्तरात् प्रसिद्धं हार्दस्य व्योम्नः आकाशस्य परत्वम्। तस्मिन्नेव हृत्पुण्डरीके आकाशे या बुद्धिर्गुहा तस्यां निहितं निगूढं ब्रह्म आत्मा सकलं यमयति।

**उपसंहारः-**

ईशा वास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्ताः, तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात्। याथात्म्यं चात्मनः शुद्धत्वापापविद्ध-त्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम्। नह्येवंलक्षणमात्मनो याथात्म्यमुत्पाद्यं विकार्यमाप्यं संस्कार्यं कर्तृभोक्तृरूपं वा, येन कर्मशेषता स्यात्। सर्वासामुपनिषदाम् आत्मायाथात्म्यनिरूपणेनैवोपक्षयात्। गीतानां मोक्षधर्माणां चैवंपरत्वात्। गीतोक्तमतानुसारेण 'आत्मा अशोच्यः' इति पूर्वं प्रतिज्ञाय तत्सिद्धये महताऽऽडम्बरेण आत्मनः सार्वकालिकत्वं विनाशशून्यत्वरूपं नित्यत्वं प्रदर्शितम्। उपनिषदामिव गीताया अपि प्रतिपाद्यम् आत्मनिरूपणमस्ति। कर्मसिद्धान्तोऽपि उपनिषत्सु प्रतिपादितम् अस्ति। श्रीमद्भगवद्गीतायाः उपनिषद्भ्यो व्यावहारिको भेदोऽस्ति। तत्र भाषागतं शैलीगतं च वैविध्यं वर्तते, किन्तु ब्रह्मात्मैकरूपलक्ष्यं प्रति उभयोः साम्यमस्ति। आत्मतत्त्वनिरूपणे श्रीमद्भगद्गीतायाम् उपनिषदां च वस्तुतः भेद एव नास्तीति।

## पादटिप्पणी

1. ई. उ. 4
2. ई. उ. 5
3. बृ. उ. 3.4.1
4. ई. उ. 8
5. भ. गी. 13.15
6. भ. गी. 13.16
7. ई. उ. 5
8. भ. गी. 6.37
9. भ. गी. 15.15

## संदर्भग्रन्थाः


1. ईशावास्योपनिषत्-(व्याख्याषट्कोपेता), संस्कृतसंशोधन संसत्, यादवाद्रि (मेलुकोट्) प्रथममूद्रणम्-1997.
2. उपनिषत्संग्रहः, मोतीलाल बनारसीदास, चेन्नै, प्रथम संस्करण-1970, पुनर्मुद्रणः 2006.
3. भगवद्गीता गीता प्रेस, गोरखपुर.-2000.
4. ईशादिदशोपनिषदः-शाङ्करभाष्यसमेतम्, मोतिलाल् बनारसीदास, वाराणसी, 1992.
5. उपनिषद्भावप्रकाशः-2-एन. एस. रामभद्राचार्यः, सनातनभारतपाठशाला, मैसूर-2004.
6. ईशावास्योपनिषत्-शाङ्करभाष्यसमेतम्, हिन्दीव्याख्या सहित, गीताप्रेस, गोरखपुर-उ.प्र.
7. गीता, शाङ्कर-भाष्य सहित, गीता प्रेस, गोरखपुर, 1952.
8. गीता, सं.- सनातन देव महाराज, वाराणसी, 1962.
9. गीता, मधुसूदन सरस्वती कृत गूढार्थदीपिका सहित, सम्पा. व व्याख्याकार- मदनमोहन अग्रवाल, चौखम्वा संस्कृत प्रतिष्ठान, दिल्ली, 1996.
10. ईशावास्योपनिषत् शाङ्करीव्याख्या-शाङ्करविलास संस्कृत पाठशाला, मैसूर- 1976.
11. वेदान्तसागर-निर्णयसागर प्रेस, मुम्बाई- 1968.
12. वेदान्तसारः-युवनन्दविद्यासागरप्रेस, कोलकत्ता-1963.
13. उपनिषद्वाक्यमहाकोषः-गुजराती प्रिष्टिङ्गप्रेस्-1940.
14. ईशादि नौ उपनिषद्-गीताप्रेस, गोरखपुर- 1999.



*शोधच्छात्रा,*

*अद्वैतवेदान्तविभागः, राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः।*

ISSN 2582-2608

# आयुर्वेदवर्णितरोगविषये अथर्ववेदस्य प्रभावः

**श्री सुफलसरकारः**

*शोधसारः-*

*अस्मिन् शोधपत्रे रोगविषये आयुर्वेदे अथर्ववेदस्य कः प्रभावः अस्ति एतस्मिन् विषये संक्षिप्तरूपेण प्रस्तुतः। अत्र रोगस्य मूलकारणं किम् अस्ति तद्विषये अपि उल्लेखः कृतः। अथर्ववेदे वर्णितरोगनिरामयोपायाः के सन्ति, तेषां आयुर्वेदे प्रभावः कीदृशः वर्तते तदपि वर्णितम् अस्ति। आयुर्वेदस्य अथवा अथर्ववेदस्य मूलोद्देश्यम् किं वर्तते तदपि अत्र दृश्यते। रोगात् मुक्तिः अथ च तस्मात् सुखसमृद्धिमयं जीवनं दीर्घायुजीवनं च द्वयोः वेदयोः मुख्यमुद्देश्यमस्ति।*

अस्मिन् संसारे सुखदुःखयोः भोक्तारः जीवाः भवन्ति। ये मनसा इन्द्रियैः च सुखदुःखे अनुभवन्ति ।जीवाः यदा मानवदेहं प्राप्नुवन्ति तदा स्वाभाविकरूपेण ते सुखस्य दीर्घायुजीवनस्य च अभिलाषं कुर्वन्ति। अस्मिन् सुखिदीर्घायुजीवने मानसिकशारीरिकयोः आधयः व्याधयः च प्रतिबन्धकाः भवन्ति। एतेषां प्रतिबन्धकानां निवारणाय आयुर्वेदस्य प्रवृत्तिः वर्तते। ऋग्वेदे मानसिकदुःखात् मुक्त्यर्थं प्रार्थितमस्ति। तद्यथा-

**तं मा व्यन्त्याध्यो वृको न तृष्णजं मृगम्**[1]

आयुर्वेद इति शब्दे द्वौ शब्दौ स्तः- आयुः वेदः च। आयुषो वेदः आयुर्वेदः। अर्थात् यः आयुष्यस्य वेदः भवति सः आयुर्वेदः। यं शास्त्रम् अधीत्य आयुसम्बन्धितानि विभिन्नानि तथ्यानि प्राप्यन्ते तत् शास्त्रं भवति आयुर्वेदः। चरकमुनिना चरकसंहितायामायुर्वेदस्य लक्षणविषये उक्तम्-

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।**
**मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते॥**[2]

व्यक्तिः स्वल्पायुः भविष्यति वा दीर्घायुः भविष्यति, सः स्वास्थ्यवान् भविष्यति अथवा रोगयुक्तेनायुषा जीवनयात्रां निर्वहतीति सर्वं ज्ञातुं शक्यते आयुर्वेदात्। जीवनस्य लक्ष्यं यत्किमपि वा भवतु, परं तल्लक्ष्यमवाप्तुं मूलं भवति स्वास्थ्यं नीरोगशरीरं च। स्वास्थ्यहीनता रुग्णता च जीवनसंग्रामे व्यर्थतायाः मूलकारणं वर्तते। चरकसंहितायामुक्तम्-

**धर्मार्थकाममोक्षाणामारोग्यं मूलमूत्तमम्।**
**रोगास्तस्यापहर्तारं श्रेयसो जीवितस्य च॥**[3]

'शरीरं व्याधिमन्दिरम्' मनुष्याणां शरीरमेव रोगाणामाश्रयस्थानं वर्तते। शरीरनिर्माणकारीधातुना अस्माकं शरीरं निर्मितं भवति। एतेषां धातूनां विकृत्या व्याधिः उत्पद्यते। एतान् धातुसमूहान् साम्यावस्थायाम् समानयने आयुर्वेदस्य प्रयोजनं वर्तते। अस्मिन् विषये चरकसंहितायामुक्तम्-

**कार्यं धातुसाम्यमिहोच्यते।**
**धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्॥**[4]

आयुर्वेदस्य उत्पत्तिविषये लोकप्रसिद्धकथा वर्तते- लोकपितामहेन ब्रह्मणा प्रजासृष्टेः पूर्वं 'ब्रह्मसंहिता' नामकशतसहस्रश्लोकनिबन्धम्, एकसहस्राध्याये च विभक्तमायुर्वेदशास्त्रं रचितम्। अनन्तरं तदष्टाङ्गेन विभज्य अष्टाङ्गायुर्वेदस्य सर्जना कृता। ब्रह्मा, विष्णुः, महेश्वरः, सूर्यः दक्षप्रजापतिश्च इदमष्टाङ्गायुर्वेदम् अधीतवन्तः। दक्षप्रजापतेः अश्विनौ, अश्विनीकुमारद्वयाभ्यां देवराजेन्द्र इदं शास्त्रविशेषं प्राप्तवन्तः। अस्मिन् विषये चरकसंहितायामस्ति -

**ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः।**
**जगाह निखिलेऽऽदावश्विनौ तु पुनस्ततः॥**[5]

**अश्विभ्यां भगवाञ्छक्रः प्रतिपेदे ह केवलम्।**

**ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्॥[6]**

अष्टाङ्गायुर्वेदस्य अष्टाङ्गानि सन्ति–1. शल्यः, 2.शालाक्यः, 3.कायचिकित्सा, 4. भूतविद्या, 5. कौमारभृत्यः, 6. अगदः, 7. रसायनः 8.वाजीकरणश्च।

अथर्ववेदस्य भेषज्यमन्त्रे, आयुष्यमन्त्रे, पौष्टिकमन्त्रादौ च निहितमस्ति आयुर्वेदस्युत्सम्। अथर्ववेदस्य ऋषयः रोगव्याधीनां नेपथ्ये विशेषासुरस्य कल्पनां कृत्वा मन्त्रशक्त्या तद्दूरीकरणाय प्रयासं कृतवन्तः। अनेनैव हेतुना ज्वरासुरस्य विनाशाय ऋषिकण्ठेन उद्घोषितं वर्तते–

**अयं यो विश्वान् हरिताने कृणोय्युच्छेचयनग्निगिरि वा भिदुग्वन्।**

**अधाहि तरामन्नर सो हि भूया अधान्यङ्भूधरां वा परेहि॥[7]**

अश्मरीरोग–स्शूलवेदना–उदरी–चक्षुरोग–वात–कुष्ठादयः रोगनिरामयमन्त्राः अथर्ववेदे सन्ति। दीर्घनीरोगं स्वास्थ्यं च जीवने लब्धुमायुष्यमन्त्रस्य प्रयोगः दृश्यते। द्यावापृथिवीलोकस्य च सदृशं प्राणमभयप्रदानं कृत्वा उक्तम्–

**यथा द्यौश्च पृथिवी च न विभीतो न रिष्यतः।**

**एवा मे प्राण मा विभेः॥[8]**

अथर्ववेदस्य उपाङ्गः भवति आयुर्वेदः। सुश्रुतसंहितायामस्ति –

'इहाखलु आयुर्वेदो नाम यदुपाङ्गमथर्ववेदस्यानुत्पाद्येव प्रजाः श्लोकसतसहस्रमध्यायसहस्रं च कृतवान् स्वयंभूः[9]। यदि वैद्यात् एवं पृच्छति किम्, कस्मिन् वेदे आयुर्वेदस्युपदेशः अस्ति तर्हि तेन निःसन्देहेन अथर्ववेदं प्रति निर्देशः कृतः। अस्य कारणमथर्ववेदे दान–स्वस्त्ययन–मंगलकर्म–बलि–होम–नियम–प्रायश्चित्तोपवासमन्त्रपरिग्रहेण चिकित्सा भवति। अपि तु चिकित्सा आयुषः हिताय भवति, यत्तु आयुर्वेदस्य मुख्यप्रयोजनं वर्तते। अथर्ववेदे आयुर्वेदविवेचनं विस्तरेण दृश्यते। अथर्ववेदस्य कृमिविवेचने 'कृमि' शब्दस्यार्थः रोगोत्पादकातिसूक्ष्मः अणुः भवति। अस्य विनाशः भवति मन्त्रेण–

**दृष्टमदृष्टमतृहमथो कुरूरुमतृहम्।**

**अल्गण्डून्त्सर्वान्छलुनान् क्रिमीन् वचसा जम्भयामसि॥[10]**

अद्यतनवैज्ञानिकयुगेऽपि इयं धारणा वर्तते यद्च्छरीरे रोगाणूनां प्रवेशः मुख्यतः दूषितयोः अन्नजलयोः माध्यमेन व्रणमार्गेन च भवति। यत्तु पुराकाले वेदे विशेषतः अथर्ववेदे सम्यग्रूपेण अभिहितः दृश्यते। अथर्ववेदे वर्णितपिप्पलीवनस्पतिना उन्मादापस्मारः, वातेत्यादिरोगाणां नाशः जायते। वन्ध्यत्वमथवा अनपत्यता–तृष्णा–भूभुक्षेत्यादिषु रोगेषु अपामार्गस्युपयोगः भवति। मांसधातोः शीघ्रवर्धनाय मांसरोहिण्याः उपयोगः भवति। अथर्ववेदे बहव्यः वनस्पतयः मिलन्ति, ये वनस्पतयः पृथक् पृथक् रोगाणां निरामये उपयुज्यन्ते। ज्वर–शिरःशूल–मुखरोग–शिरोरोगुरूगविनीरोगश्च, यक्ष्मा–रक्ताल्पता–कर्णशूल–हृदरोग–गण्डमाल–बलासुपच्युदररोगश्च, नाभिरोगालजिक्लोमरोगादीनां सूर्यकिरणेन नाशः जायते। वल्मिकस्थानीयौषधिना अतिसारातिमूत्रादीनां प्रशमनः भूयते। मृगश्रृंगमृगचर्मेण क्षयकुष्ठापस्मारादयः नाशयते। शतवीर्यादूर्वया दीर्घायुः तथा अन्यरोगाणां शमनः भूयते।

उपसंहारः–अतः रोगविषये, तेषां निरामये दीर्घायुवर्धनाय च आयुर्वेदे अथर्ववेदस्य प्रभाव अतीव महत्वपूर्णः वर्तते। अथर्ववेदस्य भैषज्यमायुष्य–पौष्टिक–दीर्घायुष्यमन्त्राणां च प्रभावः आयुर्वेदविकासे बहु अधिकमस्ति। अथर्ववेदोक्तं रोगोत्पत्तेः कारणं भवति वात–पित्त–कफानि इति। एतानि आयुर्वेदे त्रिदोषाः इति रूपेण स्वीक्रियन्ते। आयुर्वेदस्य

वाजीकरणस्य उत्समपि अथर्ववेदे अस्ति। अथर्ववेदे यत् भूतविद्यायाः उल्लेखः प्राप्यते तस्य सम्बन्धः आयुर्वेदस्य दैवव्यपाश्रयचिकित्सया सह वर्तते। अथर्ववेदकालीनचिकित्सा चतुर्विधाः भवन्ति। यथा-दैवि-मानुष्य-अंगीरस्याथर्वणी च। प्राणस्य अथवा जीवनस्य हि नाम आयुः। अथर्ववेदोक्तचतुर्विधचिकित्सया सह अस्य आयुषः सम्बन्धः वर्तते। आयुषः ज्ञानं हि आयुर्वेदः भवति। आयुषः प्राणैः सह सम्बन्धः वर्तते। अतः जीवानां हिताय, दीर्घायुलाभाय नीरोगजीवनप्राप्तये च सर्वैः मनुष्यैः अथर्ववेदे उक्ताः पन्थानः अवलम्बनीयाः। आयुर्वेदः तत् हि वदति यत् अथर्ववेदे अस्ति।

## पादटिप्पणी

1. ऋग्वेदः - 1/105/7-डॉ. गंगा सहाय शर्मा, संस्कृत साहित्य प्रकाशन, नई दिल्ली -110001, संस्करण-2016
3. चरकसंहिता, सूत्रस्थान-1/15- कविराज श्री अत्रिदेवजी गुप्त-भार्गव पुस्तकालय, गायघाट, वनारस, द्वितीयसंस्करण
4. चरकसंहिता, सूत्रस्थान-1/53- कविराज श्री अत्रिदेवजी गुप्त-भार्गव पुस्तकालय, गायघाट, वनारस, द्वितीयसंस्करण
5. चरकसंहिता, सूत्रस्थान-1/4- कविराज श्री अत्रिदेवजी गुप्त-भार्गव पुस्तकालय, गायघाट, वनारस, द्वितीयसंस्करण
6. चरकसंहिता, सूत्रस्थान-1/5- कविराज श्री अत्रिदेवजी गुप्त-भार्गव पुस्तकालय, गायघाट, वनारस, द्वितीयसंस्करण
7. अथर्ववेद-5/22/2 - डॉ. गंगा सहाय शर्मा, संस्कृत साहित्य प्रकाशन, नई दिल्ली-110001, संस्करण-2015
8. अथर्ववेद-2/15/1 - डॉ. गंगा सहाय शर्मा, संस्कृत साहित्य प्रकाशन, नई दिल्ली -110001, संस्करण 2015
9. सुश्रूतसंहिता, सूत्रस्थान 1/3-डॉ. प्राणजीवन माणेकचन्द मेहता, चौखम्बा संस्कृत सीरिज, बनारस-1, ई.सन् - 1954
10. अथर्ववेद-2/31/2 - डॉ. गंगा सहाय शर्मा, संस्कृत साहित्य प्रकाशन, नई दिल्ली -110001, संस्करण-2015

## सन्दर्भग्रन्थसूची

1. संस्कृत साहित्य का इतिहास-डॉ. देवकुमार दास, सन्देश,कोलकाता- 700006, नवम संस्करण-2007
2. आयुर्वेद का सुबोध इतिहास-डॉ. कन्हैयालाल तियारी, ईस्टर्न बुक लिंकर्स, दिल्ली - 110007, प्रथम संस्करण - 2000
3. वेदों में आयुर्वेद-वैद्य पं. रामगोपाल शास्त्री, परिमल पब्लिकेशन्स, दिल्ली -110007, द्वितीय संस्करण-2006
4. चरकसंहिता, सूत्रस्थान-1/41।-कविराज श्री अत्रिदेवजी गुप्त-भार्गव पुस्तकालय, गायघाट, वनारस, द्वितीयसंस्करण
5. अथर्ववेद-5/22/2 - डॉ. गंगा सहाय शर्मा, संस्कृत साहित्य प्रकाशन, नई दिल्ली-110001, संस्करण-2015
6. सुश्रूतसंहिता, सूत्रस्थान 1/3-डॉ. प्राणजीवन माणेकचन्द मेहता, चौखम्बा संस्कृत सीरिज, बनारस-1, ई.सन् - 1954

*शोधछात्रः, मार्गनिर्देशकः, डॉ. डी. दयानाथः*

*केन्द्रीयसंस्कृतविश्वविद्यालयः लखनऊपरिसरः, लखनऊः, उत्तरप्रदेशः।*

ISSN 2582-2608

# महावीरनिर्वाणनाटके भगवतः महावीरस्य जीवनचरितस्य वैशिष्ट्यवर्णनम्

**सुश्री रेखा गौतम**

***शोधसारः-***

*अस्मिन् शोधपत्रे भगवतः महावीरस्य जीवनस्य संक्षिप्तपरिचयं दत्वा तस्य वैशिष्ट्यम् प्रकटितम्। अतिसंक्षेपेण त्रिरत्नविषये एवं च पञ्चमहावृत्तानां विषये चर्चां कृत्वा अत्र अहिंसायाः उपवर्णनं कृतम्। वर्तमाने दुराचारमये हिंसकवातावरणे च बालकस्य सर्वतोमुखविकासः असम्भवः। अतः भगवान् महावीरस्य जीवनचरित्रस्य तस्य शिक्षाणां च अनुसरणं छात्राणां कृते अत्यन्तमुपयोगी वर्तते।*

अस्मिन् महावीरनिर्वाणनाटके मूलतः वर्धमान इति नामधारिणः प्रसिद्धस्य जैनतीर्थङ्करस्य भगवतः महावीरस्य जीवनचरितस्य निरूपणमस्ति। नाटकस्यास्य मङ्गलस्तवने जैनवैदिकदर्शनयोः समन्वयः कृतो वर्तते। तद्यथा-

**ओङ्कारं बिन्दुसंयुक्तं नित्यं ध्यायन्ति योगिनः**
**कामदं मोक्षदं चैव ओङ्काराय नमो नमः।**[1]
**पार्श्वनाथः स्थितः पार्श्वे संरक्षन्भक्तमण्डलम्।**
**पापनाशाय संस्मृत्य महेशाय नमो नमः।।**[2]
**नमताममरादीनां कल्पवृक्षं कलाधराम् ।**
**नेमिनाथं नमस्कृत्य निर्ग्रन्थाय नमो नमः।**[3]

महावीरस्य जन्म 598 ई.पू.तमे काले अभवत्। भगवान् महावीरः 'वीर','अतिवीर','संमती' इत्यादिभिः नामभिः अपि प्रसिद्धः अस्ति। तीर्थंकरः महावीरस्वामी अहिंसायाः मूर्तरूपः आसीत्। अस्य मातुः नाम त्रिशला, पितुश्च नाम सिद्धार्थः आसीत्। गृहद्वारपरिवारादीन् परित्यज्य द्वादश वर्षावधिकालं यावत् असौ सतत-प्रयत्न-परिणामस्वरूपं सत्यज्ञानमलभत्। सत्यज्ञानप्राप्त्यनन्तरं रागद्वेषयोः विजयाध्द्यसौ महावीरः इति नाम्ना प्रकीर्तितः। एष महावीर एव इन्द्रियविजयात् कामजन्याच्च जिनः इत्युक्तः। तस्य जीवनं त्यागतपोभ्यां च पूर्णम् आसीत्। सः कटिवस्त्रस्यापि परिग्रहणं न कृतवान्। अहिंसा, पशुबलिः, जातिभेदः यस्मिन् युगे वर्धिताः आसन्, तस्मिन् युगे भगवान् महावीरः जातः। सः जैनधर्मस्य पञ्चशीलसिद्धान्तानां सम्पूर्णविश्वे प्रसारयत्। ये सत्य-अहिंसा-अस्तेय[अचौर्य]-ब्रह्मचर्य अपरिग्रहाः सन्ति। भगवान् महावीरस्वामी स्वस्य उपदेशैः प्रवचनैः च विश्वस्य मार्गदर्शनं कृतवान्।

महावीरोपदिष्टानि जैनशासनानि सर्वसमाजस्य अभ्युदय-निःश्रेयस-साधनानि हितकारणानि च सन्ति। अस्मिन् प्रसङ्गे सर्वप्रथमं जैनशासितं त्रिरत्नमेव विचार्यते।

जैनदर्शने सम्यग्दर्शन-सम्यक्ज्ञान-सम्यक्चरित्राणां समवायस्त्रिरत्नमिति कथ्यते। वस्तुतः इदं त्रयमेव मोक्षमार्गः। यदीदं त्रिरत्नमाचर्येत, तर्हि समाजे सर्वविधः पूर्णसद्भावः स्थापयितुं शक्यः। एषां त्रयाणामपि व्याख्या अनेन प्रकारेण वर्तते-

1. **सम्यग्दर्शनम्**- सत्ये श्रद्धालुता सम्यग्दर्शनमित्युच्यते। सम्यग्दर्शने अन्धविश्वासः न विद्यते। सम्यक्दर्शनस्य अभिप्रायः अस्ति सतर्कबौद्धिकविश्वासः विकासश्च।
2. **सम्यक्ज्ञानम्**- यत् संशयरहितं निर्दोषं च ज्ञानं भवति तदेव सम्यग्ज्ञानं भवति। अर्थात् सम्यग्ज्ञानं तज्ज्ञानं कथ्यते येन जीवाजीवयोः मूलतत्त्वानां पूर्णज्ञानं भवति।
3. **सम्यक्चरित्रम्**- हितकरकर्मणाम् आचरणम् अहितकरकर्मणां च वर्जनमेव सम्यक्चरित्रमुच्यते। मोक्षस्य कृते तीर्थंकरान् प्रतिश्रद्धालुता सत्यज्ञानं च न पर्याप्तमस्ति, अपितु चारित्रिकसंयमोऽप्यपेक्षितः। सम्यक्चरित्रं मनुष्यस्य मनोवाक्कर्मसु नियन्त्रणाय निर्दिशति।

जैनमतानुसारेण पञ्चमहाव्रतानां पालनमनिवार्यमस्ति। इमे पञ्चमहाव्रताः सन्ति– अहिंसा–सत्य–अस्तेय– ब्रह्मचर्य–अपरिग्रहाः च। एतेषां विषये संक्षेपेण विवरणं प्रस्तूयते–

**सत्यम्**– असत्यस्य परित्यागेन एव सत्यस्य ग्रहणं कर्तुं शक्यते। सत्यमेव सर्वलोकहितसम्पादने समर्थो भवति, सर्वस्य च जगतः सुखमावहति, समाजस्य च संरक्षणं विदधाति, तत् सत्यम्। सत्यव्रत–पालनमपि मनसा, वाचा, कर्मणा च, त्रिविधरूपेण कर्तव्यम्। यन्मनसा चिन्तनं, तद् वचनं तदेव च कर्मकरणमित्येव सत्यस्वरूपम्।

**अस्तेयम्**– 'अस्तेय' शब्दस्यार्थः अचौर्यं भवति। किमपि अन्येषां वस्तु, तदाज्ञां विना स्वैधरूपेण ग्रहणमेव चौर्यमस्ति। संयमिना साधकेन तावदेव वस्तुजातं गृहीतव्यं, यदावश्यकं भवेत् यच्च सर्वथा दोषरहितं निर्दोषं वा भवेत्। अस्तेयमीदृशमेव जीवनमूल्यमस्ति, यत् सामाजिकमहत्वदृष्ट्या, न केवलं वाञ्छनीयम् अपितु परमावश्यकमस्ति।

**ब्रह्मचर्यम्**– ब्रह्मचर्यं चतुर्थं शाश्वत–जीवनमूल्यमस्ति। जैनधर्मग्रन्थेषु ब्रह्मचर्य–प्रसंगे एतदप्युक्तं यत् यैः पुरुषैः कामाचारादिसम्बन्धः न कुर्तव्यः तेषां कृते एव मोक्षमार्गे एकान्तवास–सात्विकाहारादि–उपायाः विज्ञापिताः। जैनधर्मदृष्ट्या ब्रह्मचर्यमेव शुद्धं पवित्रं च जीवनम् अस्ति। भगवतः महावीरस्य जीवने काम–क्रोध–मद–मोहानां एकमपि लक्षणं नासीत्। महावीरः अत्यन्तं पुण्यवान् महापुरुषः आसीत्। तस्य मते अनासक्तं पवित्रं जीवनम् एव ब्रह्मचर्यम् अस्ति।

**अपरिग्रहः**– आवश्यकताया अधिकग्रहणाद् विरामः एव अपरिग्रहः। जैनमते आचरणीयतया स्वीकृतं शाश्वतजीवनमूल्यमस्ति 'अपरिग्रहः'। अयं गुणः शाश्वत–जीवनमूल्यरूपेण सनातनभारतीयसंस्कृतेरुदात्त–सामाजिकमूल्यैर्गहनतया सम्पृक्तः। अस्मिन् विषये ईशोपनिषदुपदिशति–

**ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्।।**[4]

भगवतोमहावीरस्य कैवल्यज्ञानमार्गस्य पुष्ट्यर्थं महावीरानुयायिनः चतुर्धा विभक्ताः 1.मुनिः, 2.आर्यिका, 3.श्रविकः, 4.श्राविकाः च। प्रथमौ द्वौ वर्गौ गृहत्यागिपरिव्राजकानां कृते तथा च अन्तिमौ द्वौ वर्गौ गृहस्थानां कृते सन्ति। अयं 'चतुर्विधसङ्घः' इति उच्यते स्म। कैवल्यज्ञानार्थं धर्मव्रतानि मूलपञ्चकानि चकार भगवान् महावीरः। अहिंसा, अचौर्यम्, अमैथुनम्–अपरिग्रहः च। पञ्चव्रतानां पालनम् ऋषीणां कृते पूर्णतया परिकीर्तितम्, गृहस्थानां कृते च स्थूलरूपेण कथितम्। यद्यपि महावीरस्य धर्मदर्शनं च उक्तं पञ्चमहाव्रतात् अधिकं विस्तृतं गूढं च वर्तते। भगवता महावीरेण प्रदत्ता अहिंसायाः सूक्ष्मव्याख्या अन्यत्र दुर्लभा। सः मनुष्येषु पारस्परिकभेदभावयोः भित्तिध्वसितवान् अथ च जन्मना वर्णव्यवस्थायाः विरोधमकरोत्। सः मृदा–जलं–अग्नि–वायु–वनस्पतिभ्यः आरभ्य कीट–पशु–पक्षिभ्यः इत्यादीन् प्रति मैत्री अहिंसकविचारैः सह जीवितुम् अपि उपदेशमकरोत्, अस्य शिक्षायां पर्यावरणेन सह जीवितुं पाठः अपि प्रदत्तः अस्ति। अहिंसा एव विश्वस्मिन् विश्वे शान्तिसन्धात्री, अभ्युदयसाधिनी, गुणोत्कर्षकारिणी, सच्चरित्रमूला, धर्माभिवृद्धिः हेतुभूता भावाब्धिसंतरणैकसुता च। न केवलं जैनग्रन्थेषु अपितु वेदादिषु बौद्धग्रन्थेष्वपि अहिंसाया अनिवार्यत्वम् उपदिश्यते।

भगवान् बुद्धोऽपि अहिंसायाः आश्रयणेनैव आर्यत्वम् उद्घोषयति, न हि जातु हिंसाश्रयणेन–

**न तेन अरियो होति येन पाणानि हिंसति।**
**अहिंसा सब्बपाणानं 'अरियो'ति पवुच्चति।।**[5]

भगवान् महावीरः अहिंसायाः व्याप्तिं विस्तारितवान् तव अहिंसा दया– करुणा–आधारितं न अपितु मैत्रीभावाधारितम् अस्ति। भवतः अहिंसाचिन्तनं भूतानां प्रति आत्मीयतायाः भ्रातृत्वस्य च सहजं प्रेरणाम् अयच्छति महर्षिणा पतञ्जलिना योगदर्शने यमव्याख्यायमानेन अहिंसायाः प्राधान्यं निरूप्यते यत्–

**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः।**[6]

प्रेमभावनयैव राष्ट्रहितं विश्वहितं च सम्पादयितुं शक्यते अत एव गीतायामपि दैवीसम्पद्वर्णने भगवता कृष्णेन तत्र अहिंसागुणोऽपि प्राधान्येन समाविश्यते।

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।**
**दया भूतेष्वलोलुप्त्वमार्दवं ह्रीरचापलम्।**[7]

अद्यत्वे बालकाः यस्मिन् हिंसकवातावरणे, अशान्त्यां च वर्धन्ते तस्मात् कारणात् तेषां संयमस्य अभावः अस्ति। एषा पीढी लक्ष्यात् विचलति। एतादृशे वातावरणे वर्धमानाः बालकाः नैतिकमार्गं अनुसरन्तु इति अपेक्षा कर्तुं न सम्यक्। सर्वेषां कारणानां कारणात् अस्माकं समग्ररूपेण महावीरस्य शिक्षायाः आवश्यकता वर्तते। येन वयम् इमां पृथ्वीमधिकं सुन्दरीकर्तुं शक्नुमः। भगवान्महावीरस्य सन्देशं प्राणिमात्रस्य कल्याणार्थमस्ति सः मानवभेदस्य सर्वाणि भित्ति ध्वस्तवान्। अस्मिन् लोके न कोऽपि प्राणी श्रेष्ठः न कोऽपि क्षुद्रः अस्ति। सः पुण्यकर्माधारेण मनुष्यस्य महत्वं प्रतिपादितवान्। कोऽपि मनुष्यः श्रेष्ठः क्षुद्रः वा स्वकर्मभिः भवति। भगवान् महावीरस्य दृष्टिः(दर्शनं) समभावी आसीत्। सर्वत्र समताभावः। समताभावेन समस्तं जगत् दृष्ट्वान् साधकः आसीत् महावीरः। सः समानतायाः साधकः आसीत्। तस्य प्रतिमानम् आसीत् यत् यः जनः संस्कारवान् भवति सः आध्यात्मिक अभ्यासस्य अधिकारी अस्ति। तस्य वाक्येन जीवस्य जीवने प्रातः शुभं निर्मितम्।

'न हिंस्यात् सर्वभूतानि' एतद्वचनमपि पूर्वाभिप्रायात्मकम्। हिंसया मानवे क्रूरत्वं निर्दयत्वं सद्भावहीनत्वं च संजायते। अहिंसैव स्वोन्नतिः-परोन्नतिः राष्ट्रहितं विश्वहितं च संभाव्यते। अत एवोच्यते- **अहिंसा परमो धर्मः**[8] इति।

## पादटिप्पणी

1. रूपकत्रयी, पृष्ठ संख्या 138
2. रूपकत्रयी, पृष्ठ संख्या 138
3. रूपकत्रयी, पृष्ठ संख्या 138
4. ईशावास्योपनिषद्
5. धम्मपदम्
6. योगः 2.30
7. श्रीमद्भगवद्गीता, 16.2
8. महाभारतम्

## सन्दर्भग्रन्थसूची


1. रूपकत्रयी (श्रीजनकशंकर-मनुशङ्कर-दवे) राष्ट्रीयसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः नवदेहली। संस्करण 2019।
2. श्रीमद्भगवद्गीता, गीताप्रेस, गोरखपुर।
3. ईशावास्योपनिषद्, गीताप्रेस, गोरखपुर।
4. निबन्धशतकम् (डॉ. कपिलदेव द्विवेदी), विद्याभारती रिसर्च इन्सटीट्यूट।
5. पतंजलियोगशास्त्र योग. (2.30)।
6. संस्कृतसाहित्य का समीक्षात्मक इतिहास (पद्मश्री डॉ. कपिलदेव द्विवेदी)।
7. कोसल (दि इण्डियन रिसर्च सोसायटी आफ इण्डिया)।
8. प्रौढरचनानुवादकौमुदी(डॉ0 कपिलदेव द्विवेदी) विश्वविद्यालय प्रकाशन चौक वाराणसी।
9. https://hindi.webdunia.com/jain-religion/mahavir-swami-vv{®}®~®®®zx_v.html#amp_ct=v{{~lxx}lvzwl&amp_tf=From%w®%wzv%wys&aoh=v{{~lxxlywwx{{&csi=v&referrer=https%xA%wF%wFwww.google.com
10. https://hi.wikipedia.org/wiki/%E®%Ay%AE%E®%Ay%B~%E®%Ay%BE%E®%Ay%Bz%E®%Az%}®%E®%Ay%B®
11. https://hindi.speakingtree.in/blog/bhagwan-mahavir-ka-updesh#amp_tf=From%w®%wzv%wys&aoh=v{{~lxyv}®llvw&referrer=https%xA%wF%wFwww.google.com&ampshare=https%xA%wF%wFhindi.speakingtree.in%wFblog%wFbhagwan-mahavir-ka-updesh
12. https://hindiguider.com/mahaveer-swami-ka-jeevan-parichaya/



*शोधछात्रा,*

*साहित्यविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः लखनऊ-परिसरः, लखनऊ, उत्तरप्रदेशः।*

ISSN 2582-2608

# महाभाष्यदिशा व्याकरणपदार्थविमर्शः

**सुश्री सोनालीमण्डलः**

*शोधसारः-*

*व्याकरणं नाम सूत्रं न भवति, लक्षणमपि न भवतीति प्रतिपाद्योभयं व्याकरणपदार्थः इति माहाभाष्ये सिद्धान्तितम्। तदा केवलं सूत्राध्ययनेन कथं वैयाकरणः इत्यस्य प्रश्नस्य समाधानाय लौकिक-दृष्टान्तपुरस्सरं केवलानामवयवानामपि समुदायबोधकत्वं तत्र प्रदर्शितम्। तदनन्तरं लोकव्यवहारानुरोधेन व्याकरणपदार्थः सूत्रमिति प्रथमपक्षस्य समर्थनं क्रियते, यथा- ''अथ पुनरस्तु सूत्रम्। ननु चोक्तं सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः इति। नैषः दोषः व्यपदेशिवद्भावेन भविष्यति'' इति। पत्रेऽस्मिन् महाभाष्यदिशा व्याकरणपदार्थः विचार्यते।*

**कूटशब्दाः**- महाभाष्यम्, व्याकरणपदार्थः, सूत्रम्, अष्टाध्यायी, लक्ष्यलक्षणे।

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।**
**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः**[1]।। इति

वाक्यपदीयादिषु ग्रन्थेषु बहुधा व्याकरणशब्दस्य श्रवणं भवतीति हेतोस्तत्र व्याकरणपदार्थः कः इति विषयमाश्रित्य प्रबन्धोऽयं प्रस्तूयते। व्याकरणमिति शब्देन कोऽर्थो बोध्यते इत्याशयेन भाष्ये पस्पशाह्निके उच्यते यथा-

**अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः इति**[2]**।**

अर्थात्सूत्रवार्तिकोदाहरणादिष्वर्थेषु व्याकरणशब्देन बोध्योऽर्थः कः इति प्रष्टुराशयः।

**व्याकरणपदार्थः सूत्रम् इति विषये विचारः-**

उपर्युक्तप्रश्नस्य समालोचनायां भगवता भाष्यकृतोक्तं यथा- **सूत्रमिति**[3]।

अर्थादष्टाध्याय्याः प्रथमसूत्रं ''वृद्धिरादैच्'' (अ. 1।1।1) इत्यारभ्यान्तिमं सूत्रम् 'अ अ' (अ. 8।4।68) इति यावद्व्याकरणशब्दत्वेन व्यवहारः इत्यर्थः।एवमुक्ते सत्याक्षेपः कृतः-'सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः'[4] इति। अस्याशयो व्याकरणं नाम सूत्रमिति स्वीक्रियते चेद्व्याकरणस्य सूत्रमिति षष्ठ्यन्तेन विग्रहोऽनुपपन्नः। यतो हि ''षष्ठी शेषे'' (अ.2।3।50) इति सूत्रेणात्र षष्ठीविभक्तिः कर्तव्या। सा च षष्ठी भेदसम्बन्धनिमित्तिका। किञ्च सूत्रशब्देन व्याकरणसूत्रेष्विव वेदान्तादिशास्त्रेष्वपि व्यवहारोऽस्तीति सूत्रशब्दोऽयं सामान्यार्थस्य वाचकः। व्याकरणशब्दस्तु न तथा सामान्यवाचकः, किन्तु अष्टाध्यायी तेन बोध्यते। एवञ्च सूत्रं नाम सामान्यं, व्याकरणं नाम विशेषः। अपि च सूत्रशब्देन सम्पूर्णायाः अष्टाध्याय्याः एव ग्रहणं स्यात्, एकैकस्य ''वृद्धिरादैच्'' (अ.1।1।1) इत्यादेस्तु योगशब्देनैव ग्रहणं स्यात्। किन्तु एकैकस्यापि ''वृद्धिरादैच्'' इत्यादेः सूत्रत्वेन व्यवहारो लोके प्रसिद्धः एव। अतो व्याकरणं नाम सूत्रमित्यर्थो न वक्तुं शक्यते। व्याकरणशब्देन यदि सूत्रमित्यर्थः स्वीक्रियेत तदान्योऽपि आक्षेपः कृतो भाष्ये यथा शब्दाप्रतिपत्तिरिति। भाष्ये उच्यते 'सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते-व्याकरणस्य सूत्रमिति। किं हि तदन्यत्सूत्राद्व्याकरणम्, यस्यादः सूत्रं स्यात्'[5]। अन्यच्चोक्तं 'शब्दाप्रतिपत्तिः' इति। 'शब्दानां चाप्रतिपत्तिः प्राप्नोति- व्याकरणशब्दाच्छब्दान् प्रतिपद्यामहे'[6] इति व्यवहारो लोके प्रसिद्धः। अस्य व्यवहारस्यासिद्धयापत्तिः। यतो हि केवलं सूत्रेभ्यः शब्दानां प्रतिपत्तिर्नैव दृश्यते। किन्तु व्याख्यानतोऽपि। अतो व्याकरणं नाम सूत्रमित्यर्थाभ्युपगमे द्वितीयोऽन्यदोषः। तदनन्तरं शङ्कितं-'ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति'[7] इति। व्याख्यानं नाम सूत्रस्यैव विशेषेण ग्रहणं विवरणं वा। एवञ्च सूत्रस्यैव विश्लेषणमिति कारणाद्व्याकरणं नाम सूत्रमित्यर्थस्याभ्युपगमे न कोऽपि दोषः इति।

तदा आक्षेपः अत्रोक्तम्-'न केवलं चर्चापदानि व्याख्यानम्- वृद्धिः, आत्, ऐच् इति। किं तर्हि। उदाहरणं प्रत्युदाहरणं, वाक्याध्याहारः इत्येतत्समुदितं व्याख्यानं भवति'[8]। अस्याशयो व्याख्यानं नाम केवलञ्चर्चापदान्यर्थात्पदविभागो

ISSN 2582-2608

यथा 'वृद्धिरादैच्' इति सूत्रस्य वृद्धिः, आत्, ऐच् इति नास्ति। अपि तु सूत्रस्योदाहरणं, प्रत्युदाहरणं, वाक्याध्याहारः, सूत्रान्तरे श्रुतानां पदानामनुवृत्तिः इत्येतत्सर्वं मिलित्वा व्याख्यानं भवति। यथा–'हल्ङ्याभ्यो दीर्घात्सुतिस्यपृक्तं हल्' (अ.6।1।68)इति सूत्रम्। 'लोपो व्योर्वलि' इति सूत्राल्लोपः इत्यनुवर्तते। सूत्रे हल् इति प्रथमाविभक्त्यन्तेन सामानाधिकरण्यात्कर्मसाधनं भवति। तेन लुप्यते इत्यर्थस्सिद्ध्यति। अत्र प्रत्युदाहरणानि यथा–

1. हल्ङ्याभ्यो इति कथनेन ग्रामणीः इत्यत्र सुप्रत्ययस्य लोपो न।

2. दीर्घादित्युक्त्या निष्कौशाम्बि इत्यत्र स्थानिवद्भावेन ङ्यन्तत्वेऽपि दीर्घस्याभावान्न सुलोपो भवति।

3. सुतिसि इति कथनेनाभैत्सीदित्यत्र च्लेः स्थानेः विहितस्य सिचोलोपो न भवति। तिपा सहचरितस्य सिपः ग्रहणात् सिचः ग्रहणाभावात्।

4. अपृक्तमित्युक्तत्वाद् बिभर्ति इत्यत्र तिपस्सत्वेऽपि द्व्यल्प्रत्ययत्वैकाल्त्वाभावान्न लोपः।

5. हल् इत्युक्तत्वाद् बिभेद इत्यत्र णलोऽकारस्यैकाल्त्वेऽपि न लोपः। अन्ये सर्वेऽप्यंशाः दृश्यन्ते।

अतो व्याकरणमित्यस्य सूत्रमित्यर्थः स्वीक्रियते चेद्दोषद्वयं सम्भवति। यथा–

1. व्याकरणस्य सूत्रमिति षष्ठ्यर्थो नोपपद्यते।

2. शब्दानां प्रतिपत्तिश्च न प्राप्नोतीति।

**व्याकरणपदार्थः शब्दः इति विचारः**– व्याकरणपदार्थः सूत्रमिति स्वीकारे दोषकारणात्पक्षान्तरमुपस्थापितं भगवता पतञ्जलिना। महाभाष्यकारेणोच्यते 'एवं तर्हि शब्दः'[9] इति।

अस्याशयो व्याकरणस्यार्थश्शब्दः इति। व्याक्रियतेऽसाविति व्युत्पत्त्या शब्दो व्याकरणपदार्थः। शब्दः सूत्रस्य लक्ष्यम्। तथा च लक्ष्यलक्षणभावेन व्याकरणस्य सूत्रमिति षष्ठीविभक्तिरुपपद्यते एव।

अत्र पुनः आक्षेपो कृतः 'शब्दे ल्युडर्थः' इति। यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते। व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्। नहि शब्देन किञ्चिद्व्याक्रियते। केन तर्हि सूत्रम्'[10] इति।

अपि च व्याकरणस्यार्थश्शब्दस्स्वीक्रियते चेदन्योऽपि दोषः आगच्छति। यथा–'भवे च तद्धितः'[11] इति। व्याकरणस्यार्थश्शब्दस्स्वीक्रियते चेदन्यदोषः आगच्छति यत्– तद्धितप्रत्ययो नोपपद्यते। भाष्ये उच्यते न हि शब्दे भव योगः, किन्तु सूत्रे एव। किञ्च मीमांसकानां यागस्यापि वेदशब्दविचारकत्वात्तद्योगस्यापि वैयाकरणत्वप्रसङ्गस्स्यात्। भाष्ये उच्यते 'भवे च तद्धितो नोपपद्यते। व्याकरणे भवो योगो वैयाकरण इति नहि शब्दे भवो योगः'।

अपरो दोषो दर्शितो भाष्ये–'प्रोक्तादयश्च तद्धिताः' इति। अस्याशयः प्रोक्ताद्यर्थे विहितानान्तद्धितप्रत्ययानाम–प्रवृत्तिप्रसङ्गः।

वस्तुतो व्याकरणस्यार्थश्शब्दस्स्वीक्रियते चेद्यदुच्यते ल्युडर्थोऽनुपपन्नः। तन्न,यतो हि केवलं करणाधिकरणोरर्थयोरेव ल्युट्–प्रत्ययो भवतीति नास्ति। अन्येष्वपि कारकेषु 'कृत्यल्युटो बहुलम्' इति बहुलार्थे ल्युट्प्रत्ययो भवति। यथा–प्रस्कन्दनम्, प्रपतनम् इत्यादि। अतः शब्दे ल्युडर्थो नोपपद्यते इत्याक्षेपस्य नास्त्यवकाशः।

अस्मिन्सन्दर्भेऽन्यदप्युत्तरं प्रदत्तं यथा–'अथवा शब्दैरपि शब्दा व्याक्रियन्ते। तद्यथा गौरित्युक्ते सर्वे सन्देहा निवर्तन्ते नाश्वो न गर्दभ इति'[12]। अर्थाद्व्याकरणशब्दः करणे ल्युडन्त एव भवतु नास्ति कापि हानिः। सूत्रैरिव शब्दैरपि शब्दाः व्याक्रियन्ते। यथा– कमपि पुरुषं सास्नादिमानयं गौः इत्युच्यमाने गोशब्देनान्येषां शब्दानां निवृत्तिर्भवति। अतो ल्युडर्थो नोपपद्यते इत्याक्षेपस्यावकाशो नास्त्येव।

**लक्ष्यलक्षणे व्याकरणमिति विचारः**– व्याकरणस्यार्थश्शब्दो भवति चेत्'भवे च तद्धिताः''प्रोक्तादयः तद्धिताः' इति दोषाः आगच्छन्त्यतः पक्षान्तरमुपस्थापयति यथा–'लक्ष्यलक्षणे व्याकरणम्' इति। तथा च प्रयोगः सूत्रञ्चोभयं व्याकरणपदार्थः इत्यर्थः। तदा अपरो दोषो दर्शितो भाष्ये यथा–'समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते। सूत्राणि चाप्यधीयानः इष्यते वैयाकरण इति'[13]। अर्थात् लक्ष्यं लक्षणञ्चेत्युभयं मिलित्वा व्याकरणमिति स्वीक्रियमाणे कश्चन दोषः आगच्छति यथा– केवलमष्टाध्यायीस्थसूत्राणामध्ययनेनापि लोके वैयाकरणः उच्यते। समुदायस्य

व्याकरणपदार्थे सति अस्य वैयाकरणत्वं नैव सिद्ध्येत्। अस्य समाधानं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेऽपि वर्तते। यतो हि समुदायवाचकाः शब्दाः अपि अवयवबोधकाः भवन्तीत्यत्र लोकव्यवहारः प्रमाणम्। एतस्मिन्सन्दर्भे उच्यते 'पूर्वे पाञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तं, घृतं भुक्तं, शुक्लो नीलः, कपिलः, कृष्ण इति'[14]। अस्यायमाशयः यथा पाञ्चालदेशस्य पूर्वभागः इति वक्तव्ये पूर्वे पाञ्चालाः इति अवयविनः कृते अवयवस्य प्रयोगो भवति तद्वदत्रापि बोधव्यम्।

एवं व्याकरणं नाम सूत्रं न भवति, लक्षणमपि न भवतीति प्रतिपाद्योभयं व्याकरणपदार्थः इति सिद्धान्तितम्। तदा केवलं सूत्राध्ययनेन कथं वैयाकरणः इत्यस्य प्रश्नस्य समाधानाय लौकिकदृष्टान्तपुरस्सरं केवलानामवयवानामपि समुदायबोधकत्वं प्रदर्शितम्। इदानीं लोकव्यवहारानुरोधेन व्याकरणपदार्थः सूत्रमिति प्रथमपक्षस्य समर्थनं क्रियते यथा– 'अथ पुनरस्तु सूत्रम्। ननु चोक्तं सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः इति। नैषः दोषः व्यपदेशिवद्भावेन भविष्यति'[15] इति।

एवं रीत्या व्याकरणपदार्थः सूत्रं भवितुमर्हति। अत्र पूर्वं प्रश्नः कृतः आसीत् 'न हि सूत्रतः एव शब्दान्प्रतिपद्यन्ते। किं तर्हि। व्याख्यानतश्चेति।... अविजानत एतदेवं भवति। सूत्रत एव हि शब्दान् प्रतिपद्यन्ते। आतश्च सूत्रत एव। यो ह्युत्सूत्रं कथयेन्नादो गृह्येत'[16]।

अस्यायमाशयः उदाहरणं प्रत्युदाहरणं वाक्याध्याहारः इत्यादि सर्वं सूत्रात्पृथक् नास्ति वस्तुतः अल्पमतीनामेषा भावना। सर्वमिदं सूत्रादेव लभ्यते। अतस्सूत्रात् शब्दान्प्रतिपद्यन्ते। अतः व्याकरणपदार्थः सूत्रमिति साधुः। तथा चोच्यते–

**सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके**[17]। इति

**उपसंहारः–**

वस्तुतः भाष्ये प्रदीपे उद्योते व्याकरणपदार्थविषये विस्तृतवर्णनं लभ्यते। अतः ज्ञानपिपासुः इतोऽपि तत्रैव अन्वेषणं कुर्यात्। अत्र तु सारल्येन संक्षेपेण व्याकरणपदार्थस्य दिङ्मात्रं दर्शितमिति शिवम्।

## पादटिप्पणी

1. वाक्यपदीयम्। श्लोकः– 11
2. महाभाष्यम्। पृष्ठाङ्कः– 119
3. तदेव।
4. तदेव।
5. तत्रैव। पृष्ठाङ्कः– 120
6. तदेव।
7. तत्रैव। पृष्ठाङ्कः– 121
8. तदेव।
9. तदेव।
10. तत्रैव। पृष्ठाङ्कः– 122-123
11. तदेव।
12. तत्रैव। पृष्ठाङ्कः– 125-126
13. तत्रैव। पृष्ठाङ्कः– 127
14. तदेव।
15. तत्रैव। पृष्ठाङ्कः– 128
16. तत्रैव। पृष्ठाङ्कः– 129-130
17. तत्रैव(उद्योते)। पृष्ठाङ्कः– 130

## संकेताक्षरसूची

1. अ.– अष्टाध्यायी

## परिशीलनग्रन्थसूची


1. पाणिनिः। अष्टाध्यायी। सम्पा.–पुष्पादीक्षितः। दिल्ली; ज्ञानभारती पाब्लिकेशन्, 2009। मुद्रितम्।
2. पतञ्जलिः। महाभाष्यम्। सम्पा.–जयशङ्करलाल त्रिपाठी। वाराणसी; चौखम्बा कृष्णदास अकादमी, 2008। मुद्रितम्।
3. भर्तृहरिः। वाक्यपदीयम् (ब्रह्मकाण्डम्)। सम्पा. आचार्य पं सत्यनारायण खण्डूडी। वाराणसी; चौखम्बा विद्याभवन,2006। मुद्रितम्।
4. भट्टोजिदीक्षितः। सिद्धान्तकौमुदी(तत्त्वबोधिनीसहिता)। सम्पा. गिरिधरशर्मा, परमेश्वरानन्दशर्मा। दिल्ली; मोतीलाल बनारसीदास, 1961(प्रथमसंस्करणम्)। मुद्रितम्।



*शोधछात्रा,*

*ललित-नारायण-मिथिला-विश्वविद्यालयः, दर्भङ्गा, विहारः।*

ISSN 2582-2608

# श्रीमद्भगवद्गीतायाः द्वितीयाध्याये निहितसमायोजनस्य तथ्यात्मकविवेचनम्

श्रीमती नेहा श्रीवास्तव

*शोधसारः-*

*श्रीमद्भगवद्गीतायाः द्वितीयाध्यायस्य नाम सांख्ययोगः अस्ति। प्रस्तुतपत्रे गीतायाः द्वितीयाध्याये निहितं समायोजनस्य निरूपणं क्रियते। अतः अत्र गीतां मनोवैज्ञैनिकदृष्ट्या पश्यामः। प्रत्येकमानवः मरणपर्यन्तं संघर्षं करोति किन्तु तस्मिन् यदि समायोजनस्य गुणः अस्ति चेत् तस्य जीवनं सरलं भवति।*

*समायोजनशब्दस्य निर्माणं शब्दद्वयस्य मेलनेन अभवत्- सम्+आयोजनम् इति। यस्य अर्थमस्ति- सम्यक्तया व्यवस्था।*

*अर्थात् परिस्थित्यनुकूलस्य प्रक्रिया, यस्मिन् मानवस्य आवश्यकतापूर्तिः भवेत्, तथा मानसिकद्वन्दः न भवेत्।*

*समायोजनस्य अपराणि नामानि समञ्जनम्, संतुलनं, समरसता, समन्वयनम्, समभावश्च सन्ति।*

*यदि वयं समायोजनस्य विभिन्नपरिभाषाणाम् अवलोकनं कुर्मः, समायोजितमानवानां विशेषान् पश्यामः, तथा समायोजनस्य प्रक्रियायाः अध्ययनं कुर्मश्चेत् पश्यामः यत् श्रीमद्भगवद्गीतायां एताः सर्वाः विशेषाः, प्रक्रियाः, लक्षणानि च विद्यमानाः सन्ति। अतः श्रीमद्भगवद्गीतायाः द्वितीयाध्याये समायोजनस्य विशदविवेचना अस्ति। मनोवैज्ञानिकदृष्ट्या एतस्य अध्ययनस्य आवश्यकता वर्तते।*

**प्रस्तावना-**

जीवनस्य मूलभूतसिद्धान्तः श्रीमद्भगवद्गीतायाम् अस्ति। गीता अस्माभिः पुरातनशब्दानां नवीनरूपेण प्रयोगस्य प्रेरणां ददाति। एतत् प्राचीनम् अस्ति नवीनमपि अस्ति। कामधेनुः सदृशम् एतस्य ग्रन्थस्य यावत् दोहनं कुर्मः तावतैव अधिकं ज्ञानं प्राप्नुमः। एषः केवलं धार्मिकः ग्रन्थः एव नास्ति अपितु मनोवैज्ञानिकः ग्रन्थः अस्ति। अस्मिन् व्यक्तित्वस्य निरूपणं, बुद्धेः निदर्शनम्, उच्चकोटेः प्रबंधनशास्त्रम्, गुरुशिष्यसम्बन्ध इत्यादयः विषयाः विद्यमानाः सन्ति। गीतां मानसिक दर्शनशास्त्रम् कथयितुं शक्यते। यस्य अंतर्गते आत्मामनमस्तिष्कस्य अध्ययनं कर्तुं शक्यते।

अस्माकं जीवनं संघर्षेण पूर्णमस्ति। जीवनतः मृत्युपर्यन्तं विभिन्नसमस्याभिः ग्रस्ताः भवामः। नवजातशिशुः मातुः गर्भात् बहिः आगत्य बाह्यवातावरणे असहजं अनुभवति, युवानः उपाधिप्राप्तये क्लेशमनुभवन्ति, प्रौढाः पारिवारिकसमास्याभिः युक्ताः भवन्ति, तथा च वृद्धाः चिंताग्रस्ताः भवन्ति। प्रायः सर्वे स्वीयसमस्यायाः निवारणं कृत्वा जीवनं परिष्कृतं कुर्वन्ति। एतदेव समायोजनमस्ति। यः यावत् सम्यक्तया जीवनसंग्रामे युद्धं करोति सः तावत् एव सम्यक्तया साफल्यं प्राप्नोति। यदा कदा परिश्रमेण अपि साफल्यं न मिलति। अस्यां परिस्थितौ स्वस्य मार्गे, उद्देश्ये, व्यवहारे च परिवर्तनं परिवर्ध्दनं च करणीयमेव समायोजनमस्ति। लक्ष्यप्राप्त्यर्थं परिस्थितिः अनुकूला करणीया परिस्थितौ अनुकूलं भवितव्यमेव समायोजनमस्ति।

समायोजने शब्दद्वयमस्ति- समः+आयोजनम्। समः इत्यस्य अर्थः अस्ति सम्यक्त्या वा समानरूपेण तथा च आयोजनम् इत्यस्य अर्थः अस्ति-व्यवस्था। अर्थात् सम्यक्तया व्यवस्था करणीया।

अतः समायोजनस्य अर्थः अभवत्- सुव्यवस्था वा परिस्थितिः सम्यक्तया अनुकूलकरणस्य प्रक्रिया यस्यां जनानाम् आवश्यकतापूर्तिः भवेत् तथा च मानसिकद्वन्दः उत्पन्नः न भवेत्।

समायोजनस्य अपरं नाम समञ्जनं, संतौल्यं, समरसता, समन्वयनम्, आङ्गलभाषायाम् adjustment, गीतायाम् च समभावः इति कथ्यते।

**समायोजनस्य परिभाषा-**

* बोरिन्ग-लैगफिल्ड-महोदयोः अनुसारम् ''मन्यते यत् समायोजनं सा प्रक्रिया वर्तते यया व्यक्तिः स्वीय आवश्यकता तथा च आवश्यकता पूर्तिं प्रभावयितुं कारकेषु सन्तौल्यं स्थापयति।''

* गेत्स–जेरसिल्ड–अन्येषाञ्च अनुसारम् ''समायोजनम् सा सततप्रक्रिया अस्ति यया व्यक्तिः स्वीयव्यवहारे तथा परिवर्तनं करोति यथा स्वीय वातावरणयोः मध्ये मधुरं सम्बन्धं स्थापयितुं शक्नोति।''
* जेंस सी. कोलेनमहोदयानुसारम् ''समायोजनम् आवश्यकतापूर्ति उत्तेजनानां निवारणार्थं च मनवेन कृत प्रयासस्य परिणामः एव अस्ति।''

**अध्ययनस्य आवश्यकता–**

शिक्षायाः स्तरः उच्चः अस्ति तथापि वर्तमानसमये प्रत्येकः व्यक्तिः समायोजनस्य समस्याभिः ग्रस्तः अस्ति। अत्र शोधकर्त्री समस्यायाः स्वरूपं तथा च कारणस्य विवेचनं करोति। येन समायोजनस्य समस्यायाः परिहारं कर्तुं शक्यते।

**अध्ययनस्य उद्देश्यानि–**

* समायोजनस्य अध्ययनम्।
* श्रीमद्भागवदगीतायां निहितं समायोजनस्य अध्ययनम्।
* व्यक्तिगत – सामाजिक – समायोजनस्य अध्ययनम्।
* समायोजितव्यक्तेः अभिज्ञानस्य अध्ययनम्।
* समायोजितव्यक्तेः विशेषतायाः अवलोकनम्।

**समायोजितव्यक्तेः विशेषताः–**

* शारीरिकदृष्टया समायोजितः।
* संवेगात्मकदृष्ट्या समायोजितः।
* स्वीयाकाङ्क्षा – विकाराणाम् अभिज्ञानम्।
* स्वीयम् अन्येषां च सम्मानं करणीयम्।
* सामाजिकरूपेण समयोजितः।
* महत्वाकाङ्क्षायाः उचितस्तरः।
* मूलभूत – आवश्यकतानां पूर्तिः।
* आलोचनात्मकप्रकृतिन्यूनतान्वेशी न भवितव्यम्।
* व्यवहारे नम्यता भवेत्।
* वातावरणेन सन्तुष्टः भवितव्यम्।
* परिस्थितौ संघर्षस्य क्षमता भवेत्।
* परिस्थितेः ज्ञानं , नियन्त्रणम् अनुकूलम् आचरणं च।
* समाजविषये अपि चिन्तनीयम्।
* साहसी तथा समस्यासमाधानस्य योग्यता।
* सामाजिक– संवेगात्मकस्थिरता।

**समायोजनस्य प्रक्रिया–**

यथार्थरूपेण परिवर्तनस्य प्रकृतिः एव समायोजनस्य प्रक्रिया अस्ति। गतिमान्– व्यक्तित्वम् गतिमानं पर्यावरणं च द्वयोः सततपरिवर्तनेन समायोजनस्य प्रक्रिया जीवने निरन्तरं दृश्यते।

**समायोजनस्य प्रकाराणी–**

समायोजनं मुख्यरूपेण त्रिप्रकाराणी भवन्ति

* व्यक्तिगतसमायोजनम्।
* सामाजिकसमायोजनम्।
* व्यावसायिकसमायोजनम्।

**समायोजनस्य विशेषताः–**

* समायोजनस्य प्रक्रिया गत्यात्मकी भवति।
* समायोजनं द्विभागी प्रक्रिया अस्ति।
* समायोजनम् उद्देश्यमुखी भवति।
* समायोजनस्य प्रक्रियायाम् उद्देश्यस्य प्राप्तिः न भवति चेत् कुण्ठा भवति।

**श्रीमद्भगवद्गीतायां निहितसमायोजनम्–**

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत।।**[1]

अस्मिन् श्लोके कृष्णः अर्जुनम् उपदिशति यत् भौतिकपदार्थानां यः संयोगः अस्ति सः सुखं दुःखं वा ददाति, एतत् त्वं सोढं कुरु। अत्र कृष्णः अर्जुनम् उपदिशति यत् अविचलितं भूत्वा परिस्थितेः ग्रहणं कृत्वा समायोजितं भव।

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते।।**[2]

अत्र कृष्णः कथयति यत् यः धैर्यवान् पुरुषः सुखदुखेषु समभावः अस्ति, इन्द्रियविषयाणां संयोगः तं व्यग्रं न करोति, सः एव पुरुषः युद्धसङ्ग्रामे जीवनसङ्ग्रामे वा सः अमृतत्वं प्राप्नोति।

अत्र कृष्णः समभावविषये वदति। एतदेव मनोविज्ञाने समायोजनं कथ्यते।

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि।।**[3]

सुखदुःखेषु, लाभहानिषु, जयपराजयेषु समभावः। एतासु परिस्थितीषु समभावः भूत्वा कर्मं कुर्मश्चेत् कष्टं न भविष्यति, भयं न भविष्यति, पापं न लगति। संवेगानां समभावे स्थापयितुं कृष्णः अत्र ज्ञानं ददाति।

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते।।**[4]

हे अर्जुन, त्वम् आसक्तिं त्यज। साफल्य– असाफल्येषु समभावः भूत्वा समस्तं कार्यं कुरु। यतोहि समभावः एव योगः उच्यते। अप्राप्यस्य प्राप्तेः नाम योगः। एवं श्रीमद्भगवद्गीतायां निर्दिष्टम् अस्ति। अर्थात् यदि वयं समभावं भूत्वा कार्यं कुर्मश्चेत् अप्राप्यस्य प्राप्तिः भविष्यति। आसक्तिं, भयं, कष्टं विना पूर्णतया तादात्म्यं भूत्वा कर्मं कुर्मश्चेत् कार्यस्य सिद्धिम् अवश्यमेव भविष्यति।

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्।।**[5]

सम्बुद्धियुक्तः पुरुषः अस्मिन् लोके पाप– पुण्यम्, शुभाशुभम् त्यक्तवा मुक्तः भवति। अतः हे अर्जुन त्वं समत्वरूपयोगे युज्यस्व। समत्वरूपयोगः एव कर्मसु कुशलता अस्ति अर्थात् कर्मबन्धनात् मुक्तेः साधनम् अस्ति।

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्।।**[6]

अत्र अर्जुनः कृष्णं पृच्छति यत् हे केशव समाधिस्थपुरुषाणां किं लक्षणम् अस्ति। स्थितप्रज्ञः कथं वदति, कथम् उपविशति, कथं चलति।

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।।**[7]

अस्मिन् श्लोके भगवान् कृष्णः स्थितप्रज्ञस्य लक्षणविषये वदति यत् यदा मानवः सम्पूर्णकर्माणाम् त्यागं करोति तथा च आत्मनि सन्तुष्टः भवति तदा सः स्थितप्रज्ञः कथ्यते। महत्वाकाङ्क्षा मनुष्यस्य प्रगतेः कृते सम्यक् भवति किन्तु तस्याम् आसक्तिः न भवेत्।

कस्मिन् अपि विषये तथा आसक्तिः न भवेत् यत् तस्य अप्राप्तेः वयं चिंताग्रस्तः भवामः, दुखं भवेत्, व्यग्रता भवेत्। एवं भविष्यति चेत् असंतुलनं भविष्यति तथा च समायोजनं कठिनं भविष्यति। एतस्योपरि यः विजयं करोति सः पुरुषः स्थितप्रज्ञः कथ्यते।

**दुखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**
**वीतराभयक्रोधः स्थितधिःर्मुनिरुच्यते।।**[8]

दुखेषु यस्य मनः व्यग्रः न भवति, सुखेषु यः लिप्तः न भवति, यः रागभयात् मुक्तः अभवत्, सः पूर्णतः समायोजितः अस्ति। अत्र एतादृशः पुरुषः स्थितप्रज्ञमुनिः कथ्यते।

सुखदुखानाम् अनुभूतिः आत्मकल्याणाय लोककल्याणाय च भवेत्। यदि वयम् अस्मिन् अनुरक्तः भवामः चेत् स्वीयक्षमतायाः सार्थकं नियोजनं कर्तुं न शक्नुमः। तथा च अन्तःकरणस्य विक्षोभः भवति।

एतेन श्लोकेमाध्यमेन श्रीकृष्णः व्यक्तिगतसमायोजनस्य उद्धरणं प्रस्तौति।

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता।।**[9]

यः पुरुषः शुभप्राप्तेः हर्षितः न भवति, अशुभात् घृणां न करोति एतादृशः समदर्शीपुरुषस्य बुद्धिः ज्ञाने प्रतिष्ठितः भवति।

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः।**
**वशे हि यस्य इन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।।**[10]

समस्तम् इन्द्रियं केंद्रितं कृत्वा, समाहितचित्तं भूत्वा मम ध्याने उपविश। यतोहि यस्य इन्द्रियाणि केन्द्रीभूतानि भवन्ति तस्य विवेकशीला बुद्धिः स्थिरा भवति।

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति।।**[11]

यदा चित्तं प्रसन्नं भवति तदा समस्तदुःखानां विनाशः भवति यतोहि प्रसन्नचित्तमनुष्यस्य बुद्धिः परमात्मनि स्थितः भवति।

लौकिकदृष्ट्या पश्यामश्चेत् यदि मनः अप्रसन्नः, चिंताग्रस्तः, कुण्ठायुक्तश्च भवति तर्हि तस्य चिन्तनशक्तिः नष्टा भवति तथा च सः पुरुषः किमपि कार्यं कर्तुं न शक्नोति। अतः इन्द्रियाणि आत्मवशं कृत्वा एव मानवः स्वीयसमाजयोर्मध्ये समंजनम् स्थापयितुं शक्नोति। तथा लौकिकसुखेन सह अलौकिकसुखं प्राप्नोति।

**निष्कर्षः-**

श्रीमद्भगवद्गीतां वयं धार्मिकग्रन्थरुपेण अध्ययनं कुर्मः। किन्तु गीतायाः द्वितीयाध्याये समायोजनस्य विशद विवेचना अस्ति। अतः प्रस्तुतशोधे अलौकिकं न अपितु लौकिकजीवनस्य समस्यानाम् उन्मोचनार्थं प्रस्तुतग्रन्थस्य मनोवैज्ञानिकम् अध्ययनम् अभवत्। अत्र यः समभावः इति शब्दस्य निदर्शनम् अस्ति तम् एव समायोजनम् इति वक्तुं शक्यते। यः समदर्शी स्थितप्रज्ञः वा पुरुषाणां लक्षणम् अस्ति सः एव समायोजितपुरुषाणाम् गुणरूपेण द्रष्टुं शक्यते। इन्द्रियनिग्रहं कृत्वा पूर्णतया समायोजितं कर्तुं शक्यते। तथा च लोककल्याणे उत्कृष्टं योगदानं दातुं शक्यते।

**शैक्षिकोपयोगिताः-**

* प्रस्तुत अध्ययनेन इन्द्रियनिग्रहस्य ज्ञानं मिलिष्यति। येन चिन्ता, कुण्ठा, समायोजनादिसमस्यानां समाधानं भविष्यति। मानवः समायोजितः भूत्वा लोककल्याणाय सक्षमः भविष्यति।
* लौकिकजीवने उपयोगिताकारणात् लोक व्यवहारे गीतायाः अध्ययनं प्रति जिज्ञासा भविष्यति।
* श्रीमद्भगवद्गीतायां निहितम् अन्यचराणां व्यक्तित्व-बुद्धि-समायोजन-प्रबन्धनानां गहनाध्ययनस्य प्रेरणा मिलिष्यति।
* व्यक्तिगतसमायोजनेन सह सामाजिकसमायोजनशैक्षिकसमायोजनानामपि अध्ययनं कर्तुं शक्यते।
* समग्रगीतायाः मनोवैज्ञानिकाध्ययनस्य जिज्ञासा भविष्यति।

## पादटिप्पणी

1. श्रीम.2/14
2. श्रीम.2/15
3. श्रीम.2/38
4. श्री.2/48
5. श्रीम.2/50
6. श्रीम.2/54
7. श्रीम.2/55
8. श्रीम.2/56
9. श्रीम.2/57
10. श्रीम.2/61
11. श्रीम.2/64

## सन्दर्भग्रन्थसूची

* पाठक, पी. डी., शिक्षामनोविज्ञान, श्रीविनोद पुस्तक मन्दिर, आगरा-2
* पाठक, आर. पी., उच्चशिक्षामनोविज्ञान, राधा पाब्लिकेशन्स, नई दिल्ली
* मंगल, एस. के., शिक्षामनोविज्ञान,PHI Learning Private Limited, Delhi
* श्रीमद्भगवद्गीता, गीताप्रेस, गोरखपुर-273005
* युगगीता, शान्तिकुञ्ज, गायत्री परिवार
* www.Skyeducare.Com
* bhagavadgita.org.in
* SAFIC.AUROSOCIETY.ORG

*शोधच्छात्रा,*

*केन्द्रीयसंस्कृतविश्वविद्यालयः लखनऊपरिसरः, लखनऊ।*